# अथर्ववेदे राजनीतिः

लेखकः सम्पादकश्च
डॉ. विनायकरामचन्द्ररटाटे

सम्पूर्णानन्द संस्कृत विश्वविद्यालयः

SARASVATĪBHAVANA-STUDIES

[ Vol. 38 ]



# ATHARVAVEDE RĀJANĪTIḤ

BY

DR. VINAYAKA RAMCHANDRA RATATE
Research Assistant
Department of Musicology
Banaras Hindu University
Varanasi




VARANASI
1989

Research Publication Supervisor—
Director, Research Institute
Sampurnanand Sanskrit University
Varanasi—221 002

□

Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer
Sampurnanand Sanskrit University
Varanasi—221 002

□

Available at—
Sales Department
Sampurnanand Sanskrit University
Varanasi—221 002

□

First Edition : 1000 Copies
Price—Rs. 50.00

□

Printed at—
Mahakant Press
B 18/14, Rewari Talab
Varanasi—221 010

सरस्वतीभवन-अध्ययनमाला

[ ३८ ]

# अथर्ववेदे राजनीतिः

लेखकः सम्पादकश्च
डॉ० विनायकरामचन्द्ररटाटे
शोध-सहायकः
संगीतशास्त्रविभागस्य
काशीहिन्दूविश्वविद्यालये
वाराणसी





वाराणस्याम्

२०४५ तमे वैक्रमाब्दे १९११ तमे शकाब्दे १९८९ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः —
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी—२२१ ००२ ।

□

प्रकाशकः—
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी—२२१ ००२ ।

□

प्राप्तिस्थानम्—
विक्रय-विभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी—२२१ ००२ ।

□

प्रथमं संस्करणम्, १००० प्रतिरूपाणि

मूल्यम्—५०.०० रूप्यकाणि

□

मुद्रकः—
महाकान्त प्रेस,
बी० १८/१४, रेवड़ी तालाब
वाराणसी—२२१ ०१० ।

# FOREWORD

I have great pleasure in placing this treatise on *Polity in Atharvaveda* by Pandit Vinayaka Ramchandra Ratate in the hands of the readers. This was originally the author's thesis submitted to this University for *'Vidya-Varidhi'* (Ph.D.) degree.

Shri Ratate belongs to a reputed family of scholars of Varanasi. He is one of the few living representatives of the Atharvavedic tradition in this country, which was resuscitated by his late father. What is more, he is deeply interested in transmitting this inherited tradition in the typical *gurukula* style to deserving young students in the missionary spirit, without expectation of return or reward.

The *Atharvaveda* is a repository of knowledge pertaining to a variety of subjects, which have a direct bearing on practical living. It is unfortunate that the knowledge and wisdom enshrined in this Veda has not been properly compiled, understood, assessed or projected by persons proficient in the traditional discipline. It is equally unfortunate that the *Atharvaveda* is looked upon as a manual of charms, rituals, spells allied to black magic and the like. The present treatise will show how these misconceived notions about this fourth Veda are thoroughly ill founded.

The *Atharvaveda* has long been recognised in our country as essential equipment for a royal Guru. Kālidāsa, for instance, speaks of the importance of Atharvavedic knowledge to a royal Guru in the context of the consecration of Aja by a priest well-versed in *Atharvaveda* and declares that Aja became invincible to his enemies on account of the strength that he acquired through the Atharvavedic rituals, performed by his Guru, Vasiṣṭha –

स बभूव दुरासदः परैर्गुरुणाथर्वविदा कृतक्रियः।
पवनाग्निसमागमो ह्ययं सहितं ब्रह्म यदस्त्रतेजसा ॥

Besides its importance as a tool for successful state administration, the *Atharvaveda* contains a considerable amount of scientific and quasi-scientific information which deserves to be tested and verified in the crucibles of modern science. I wish that the writer of this book, with his traditional background of Atharvavedic learning will direct his energies to explore more virgin fields of research based on the *Atharvaveda*. I commend this excellent work to scholars interested in discovering the wealth of ideas on political science contained in the *Atharvaveda*. In this connection, I would draw the attention of the readers to the interesting hypothesis of the writer of this book that Kauṭilya belongs to the *Atharvaveda*.

Sporadic efforts have been made in our country by Indian scholars, seeking to recreate the lost traditions of practical knowledge and wisdom enshrined in this Veda. Pandit Keshav Deo Shastri of Delhi has been a dedicated worker in the field of *Atharvaveda* and has been furrowing a lone field for many years and rendering service to people to solve varied problems with the aid of Atharvan rituals. It was also reported by some of his beneficiaries that his rituals had yielded surprising results. He has also considerable published work in Hindi to his credit, of which his कर्मज भव-व्याधि देवी चिकित्सा may be described as a pioneering work. At my instance, this old scholar has been provided with a 'Shastrachoodamani' grant by the Ministry of Education, Government of India for pursuing his work and to enable him to impart his knowledge to some youngsters. But the style of his functioning cannot be said to be methodical or scientific. The time is now ripe for a planned concerted effort to organise and coordinate such work on truly scientific lines.

It is my hope that the present work will serve as a source of inspiration to talented young men to take up such work as a national mission to rediscover the forgotten secrets of the *Atharvaveda*. May I hope that lovers of Indian Culture will come forward to provide the necessary incentives to such work in a big way and harness the expertise available in the country in formulating and implementing purposive projects for the rediscovery of *Atharvaveda*.

With these observations, I commend the present work to the general as well as scholarly readers.

Varanasi,
18.7.1989
Guru-Pūrṇimā

**V. Venkatachalam**
*Vice-Chancellor*
Sampurnananda Sanskrit University

# सम्मतिः

पण्डितवरेण श्रीविनायकरामचन्द्ररटाटेमहोदयेन 'अथर्ववेदे राजनीतिः' इति विषयमवलम्ब्य गवेषणात्मको निबन्धः प्रणीतोऽस्ति। अथर्ववेदसंहितया सार्धमेव प्रायशः समग्रवैदिक वाङ्मयस्य तदनुप्राणितस्य स्मृतिपुराणादिकस्य च पर्यालोडनपुरस्सरं ग्रन्थमणिरयं महताऽध्यवसायेन समुद्भावितोऽस्ति। समीक्षात्मकमेतादृशं वेदविषयकं विवेचनं न भवति सुकरं समेषां वेदविदामपि सुधियामिति परम्पराधिगतवेदविद्यस्य पाश्चात्यगवेषणासरणेरपि कृतविद्यस्य पण्डितवरस्यायमुद्यमो नूनं प्रशंसार्हः।

आधुनिकानां विचाराय पर्याप्ता सामग्री रटाटेमहोदयेन ग्रन्थेऽस्मिन् समावेशिता। विविधानां संघटनसंस्थानां यानि विविधानि स्वरूपाण्यथर्ववेदे निर्दिश्यन्ते, तान्याधुनिकानां विचाराय कल्पिष्यन्ते कथमेतावति प्राचीनेऽपि वेदे प्रत्यग्रप्रत्यग्राणि तत्त्वानि ग्रथ्यन्त इति। तत्र सामाजिकशासकीयादिनीतिविधानानां विचारकर्त्रीणां संस्थानां विपुलाः समुल्लेखा दृश्यन्ते। तत्र सभा समितिः, आमन्त्रणम्, विदथः, चरणम्, परिषद् सङ्घः, विशः, गणसभा, राष्ट्रियसभा, बृहद्राष्ट्रियसभा, विद्वत्सभा, गुप्तमन्त्रणासभा, ग्रामीणसभा, धनिकसभा, अरिसभेत्येतादृशानामुपयोगिनां नूतनकल्पानां बहूनां विषयाणां विमर्शो महोपकाराय सेत्स्यति जिज्ञासूनाम्। निबन्धमिममधीत्य जिज्ञासवो लाभान्विता भवन्त्विति भगवन्तं भूतनाथं काशीविश्वनाथं सम्प्रार्थ्य पण्डितवरं रटाटेमहोदयमाशिषा पूरयामि। ग्रन्थस्यास्य च भूयासं प्रचारं कामयमानः।

महामहोपाध्याय 'पद्मभूषण'
पो० एन० पट्टाभिरामशास्त्री
वेदमीमांसानुसन्धान केन्द्र
बी० ४/७ हनुमान घाट, वाराणसी

# प्रास्ताविकम्

यथा दृश्यमाना चराचरात्मिका स्थूला प्रकृतिः सत्त्वरजस्तमोगुणात्मिका विश्वात्मना रज्यते नियन्त्र्यते च, तथैव प्रजारूपायाः प्रकृते रञ्जनाय नियन्त्रणाय च कश्चन राजा नियन्ता वाऽपेक्ष्यते। तत्र सत्त्वगुणात्मिकायाः प्रकृते रञ्जनम्, रजोगुणात्मिकाया अनुरोधनम्, तमोगुणात्मिकायाश्च तस्या नियन्त्रणमावश्यकं भवति। प्रकृतेः प्रकृतिं सम्यग्जानानस्य नियन्तुः सत्त्वे प्रकृतयो मिथः प्रातीप्यं जहति। एवं सत्येव राष्ट्रं स्वास्थ्यमनुभवति। दैहिके मानसे च दोषोद्भवे तावदायुर्वेदो दोषवैषम्यं गुणवैषम्यं च मनुते—

वायुः पित्तं कफश्चेति शारीरो दोषसंग्रहः।
मानसः पुनरुद्दिष्टो रजश्च तम एव च॥ इति।

दोषादिवैषम्याभावे सत्येव स्वास्थ्यमुपजायते। तदुक्तं चरकसंहितायां स्वास्थ्यलक्षणम्—

समदोषः समाग्निश्च समधातुमलक्रियः।
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते॥ इति।

प्रतिसमाजं सत्त्वगुणोपहितैर्जनैः सत्रा रजस्तमोगुणान्वितानां जनानां महौघो दरीदृश्यते। तेषामत्याचारस्योद्दण्डतायाश्च दमनार्थं दण्डविधानं स्वाभाविकमेवान्यथा मात्स्यन्यायः प्रवर्तते राष्ट्रे। यथोक्तं महाभारतस्य शान्तिपर्वणि (६९, ७६)—

दण्ड्यं दण्डयति नो यः पापदण्डसमन्वितः।
तस्य राष्ट्रे नःसन्देहो मात्स्यो न्यायः प्रकीर्तितः॥ इति।

गुरुवच्छासकेन शिष्यवत् प्रकृतयः शासनीया भवन्ति। प्रकृतिहिताय प्रवर्तते शासकः। प्रजारूपाणां प्रकृतीनां शासनाय शासकेन सप्तप्रकृत्यात्मकं सप्ताङ्गं राज्यं संघटनीयं भवति। तदुक्तं याज्ञवल्क्यस्मृतौ (१, ३५२)—

स्वाम्यमात्यौ पुरं राष्ट्रं कोषदण्डौ सुहृत् तथा।
सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते॥

यद्यपि कामन्दकीये नीतिशास्त्रेऽपि सप्तप्रकृतिकमेव राज्यं समाम्नातम्, तथापि तत्रास्त्येव मनाग्भेदो यथा—

अमात्यराष्ट्रदुर्गाणि कोषो दण्डश्च पञ्चमः।
एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः॥
एताः पञ्च तथा मित्रं सप्तमः पृथिवीपतिः।
सप्तप्रकृतिकं राज्यमित्युवाच बृहस्पतिः॥ ८,४-५

क्वचिद् दुर्गाभ्यन्तर एव पुरस्य संनिवेशो विधीयत इति दुर्गाद् भिन्नं पुरं नोल्लिख्यते । इत्थं वास्तविको भेद उभयत्रैव नावतिष्ठते ।

एवं सत्यपि प्रकृतित्वेन प्रथितानां प्रजानामिह संनिवेशो न व्यधायि । नामलिङ्गानुशासनकारेण तदेकत्रैव समावेश्यते—

**स्वाम्यमात्य-सुहृत्कोश-राष्ट्र-दुर्गबलानि च ।**
**राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ।। इति ।**

परिवर्तिनि राजतरङ्गिणीग्रन्थे ( १. ११९ ) तावदितो भिन्ना अन्याः सप्त प्रकृतयोऽपि दर्शिताः सन्ति । यथा—

**धर्माध्यक्षो धनाध्यक्षः कोषाध्यक्षश्चमूपतिः ।**
**दूतः पुरोधा दैवज्ञः सप्त प्रकृतयोऽभवन् ।।**

प्रकृतिः, प्रधानं शक्तिरिति पर्यायवाचिनः शब्दाः । उक्तानामष्टविध-प्रकृतीनां तौल्यमाधिभौतिकीभिः प्रकृतिभिः समं विधातुं शक्यते । एवं तावदष्टानां संभूयैव सामर्थ्यमभ्युपेयते । दुराचारदमनार्थं दण्डस्य प्रवर्तितत्वात् तस्य च सम्पोषणार्थमेवान्यासां प्रकृतीनामुपयोगित्वाद् दण्ड एव प्राधान्यं बिभर्तीत्ये-तस्मात् कारणात् सम्पूर्णा राजनीतिरेव दण्डनीतिपदेन व्यवह्रियते स्म । परतो दण्डस्यैवान्यासां प्रकृतीनां धारकत्वाद् धर्म्यत्वं समाश्रुतमिति मनुना ( ७. १८ ) धर्मशब्दस्तत्र प्रयुज्यते—

**दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।**
**दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ।। इति ।**

एतस्मादेव हेतोर्दण्डनीतिर्धर्मनीतित्वेनापि प्रख्याताऽभूदिति धर्मशास्त्रे तत्समावेशो जायते । दण्डस्य विधायको न्यायाधिपतिः, स च पुरा राजैव भवति स्मेति राजानमाश्रितो दण्डस्तस्माद् दण्डनीती राजनीतितया प्रथां भेजे । सर्वत्रैव प्रकृतिलक्षणेषु राष्ट्रशब्दो दृश्यते न तु राज्यशब्दः ।

राष्ट्रस्य दण्डनीते राजनीतेर्वा भारतीया परिकल्पना सर्वथा नूतनेति पाश्चात्त्यदेशीया सोत्सेकमभिमन्वते स्म । परतो विद्वद्भिः प्राचीनां भारतीयां राजनीतिमधिकृत्य गवेषणा व्यधायि, तया भ्रान्तधारणाऽसौ कियतांशेन विधूनि-ताऽप्यभूत् । किन्तु नेदानीमपि तत्तद्ग्रन्थानां राजनीतिविषयकं विशिष्टमध्ययनं विहितमासीत् सोहापोहं साकल्येन विद्वद्भिरिति जिज्ञासवः प्रतीक्षन्ते तदध्येतुम् । एकैकशो वैदिकीः संहिताः, ब्राह्मणानि, सूत्रग्रन्थान्, वाल्मीकीयं रामायणम्, महाभारतम्, महाकाव्यादीनि च पर्यालोड्य दण्डनीतिविषयकाणां पार्थक्यशः स्वतन्त्रग्रन्थानां विरचनार्थमाहूयन्ते स्म तद्विशेषज्ञाः ।

तत्र राष्ट्रव्यवस्थारूपाया दण्डनीते राजनीतेर्वाङ्गानि चेदेकैकस्यां वैदिकसंहितायां विशदमनुशीलितानि भवेयुः, भूयांस्यज्ञातानि तत्त्वानि प्रस्फोरि-तानि स्युः । सप्तप्रकृतिकं सप्ताङ्गं वा राज्यमुपलक्षणमात्रम् । राष्ट्रसंघटनाय

तद्वयष्टिभूताः कुलसमाजसभादयोऽपि तत्रैव समनुयन्ति । सभादिभिर्नियमादिषु परिकल्पितेष्वेव दण्डनीतिः प्रवर्तते । मनुस्मृत्यादिषु संकेतमात्रं विहितमस्ति तदीयम् ( ८. ११-१४ )।

अथर्ववेदे खलु प्रामुख्येण राजनीतितत्त्वानि सन्ति विकीर्णानि । यद्यपि तत्र क्वचित् संग्रहेण क्वचिच्च वैशद्येन विविधानां राजनीतिविषयाणां निरूपणं कृतं वर्तते, तथापि साकल्येन तावदथर्ववेदवाङ्मयं निर्मथ्य राजनीतिग्रन्थलेखन-प्रयासो न मद्दृष्टिपथमुपेतः । मन्ये, नैयून्यमिदमेव विभाव्य विश्वविद्यालयेनाथर्व-वेदे कृतभूरिपरिश्रमः परम्परया चाधिगतवेदार्थतत्त्व आचार्यविनायकरामचन्द्र-रटाटेमहोदय एतद्विषयकगवेषणाकार्याय वृतः । तेन मातृभूमे राष्ट्रभक्तिप्रेरकस्य महत्त्वम्, राजनीतेरुपजीवनम्, राष्ट्रिया शक्तिः, सभा, स्त्रीसभम्, सभाभवनम्, राजकर्तव्यानि, राजकर्तारः, राज्याङ्गानि, राज्ञो निर्वाचनम्, राज्ञः स्थैर्यम्, राष्ट्र-स्यैश्वर्यवृद्धिः, राज्याभिषेकः, स्वराज्ये राज्ञः पुनः स्थापना, दुष्टनाशः, दुष्ट-दमनम्, दुष्टनिवारणम्, सेनासम्मोहनम्, नीतयः, करग्रहणम्, नीतिनिपुण-समादरः, शासनव्यवस्था चेत्यादीनामथर्ववेदोपगतानां राजनीतिविषयाणां सम्यगुपपादनमकारि ।

राजनीत्युपपत्तिविषयकं ज्ञानमधिकृत्य मनुयाज्ञवल्क्यस्मृत्यादयो विदित-वेदितव्या आसन् । यदि भूपतीनां प्रजाशासनं कर्तव्यमासीत्, तर्हि कापथमनुवर्त-मानानामरीणां भूपतीनां शासनाय तावदथर्वाङ्गिरसे दक्षाणामपि सामर्थ्य-मासीदिति निर्दिशति मनुस्मृतिः—

श्रुतीरथर्वाङ्गिरसीः कुर्यादित्यविचारयन् ।
वाक्शस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन् द्विजः ॥ ११,३३ ।

याज्ञवल्क्यस्मृत्यां त्वथर्ववेदस्य विषयद्वयं प्रतिपाद्यते—अर्थशास्त्रम् ( दण्डनीतिः ), शान्त्यादिकर्माणि चेति । यथा—

पुरोहितं प्रकुर्वीत दैवज्ञमुदितोदितम् ।
दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा ॥

इत्यत्र मिताक्षरायां दण्डनीतिपदेन तावदर्थशास्त्रं गृह्यते, अथर्वाङ्गिरस-पदेन च शान्त्यादिकर्माणि निर्दिश्यन्ते । कामन्दकीयनीतिशास्त्रे त्वथर्वविहि-तस्य कर्मणः स्पष्टतः शान्तिपौष्टिकत्वं व्याहृतम् । दण्डनीतिपदस्यापि तत्र पार्थक्येन समुल्लेखः कृतोऽस्ति । तत्र प्रयुक्तेन त्रयोपदेनाथर्ववेदस्य दण्डनीतिः शान्तिकर्म चेति विषयद्वयमभिप्रेयते—

त्रय्यां च दण्डनीत्यां च कुशलोऽस्य पुरोहितः ।
अथर्वविहितं कर्म कुर्याच्छान्तिकपौष्टिकम् ॥ इति ।

एवमुक्त्या खल्वथर्ववेदस्योपवेदतयाऽर्थशास्त्रस्यैव ग्रहणं साधीयो मन्यताम् । तत्रत्यानामाभिचारिकीणां क्रियाणां विमर्शेन चरणव्यूहे तस्योपवेद आयुर्वेदोऽभिमतो कश्चिदभिप्रायमाविर्भावयति ।

अथर्वपरिशिष्टे राष्ट्रस्य निरुपद्रवं संवर्धनार्थमथर्वणः पुरोहितस्य स्थितिरावश्यकतया समाम्नातेति राजनीत्या सार्धमथर्ववेदस्य खल्वनितरसाधारणो महिमा समास्थीयते —

यस्य राज्ञो जनपदे अथर्वा शान्तिपारगः ।
निवसत्यपि तद् राष्ट्रं वर्धते निरुपद्रवम् ॥
तस्माद् राजा विशेषेण अथर्वाणं जितेन्द्रियम् ।
दानसम्मानसत्कारैर्नित्यं समभिपूजयेत् ॥ इति ।

आयुष्मता रटाटेमहोदयेन राजनीतिमवलम्ब्यार्वाचीनानां विपश्चितामपि मतानि समालोचतानि सन्ति गवेषणाप्रबन्धेऽस्मिन् । सप्तभिरध्यायैरुपनिबद्धोऽयं गवेषणाप्रबन्धो गवेषकस्य भूरिपरिश्रमं गभीरानुशोलनं समालोचनाशक्तिं च निदर्शयति । विषयविशेषीकरणस्य सूत्तमं निदर्शनमिदं विभाव्यताम् । विषयस्यावगाहनेन प्रेक्षकाणां च प्रतिवेदनेन महतीं प्रतिष्ठामर्हति गवेषणाप्रबन्ध एषः । गवेषणाप्रबन्ध इहाविज्ञातप्राया नूतना आशया अप्याविष्कृता विराजन्ते । अनेन सरस्वतीसमर्पनेन विद्वज्जना नूनं प्रीणयेयुर्जिज्ञासवश्चोपकृता भवेयुरिति ध्रुवं मे प्रत्ययः ।

विश्वविद्यालयानुदानायोगस्यानुदानसाहायकेन ग्रन्थस्यास्य मुद्रणं संजातमिति विश्वविद्यालयस्य पक्षतस्तत्रत्येभ्योऽधिकारिभ्यः साधुवादान् वितरन् विरमति ।

वाराणस्यां
वसन्तपञ्चम्याम्
२०४५ विक्रमाब्दे

भागीरथप्रसादत्रिपाठी 'वागीशशास्त्री'
निदेशकः
अनुसन्धानसंस्थानस्य

# कृतज्ञताज्ञापनम्

वेदान्तरापेक्षयाऽस्मिन्नथर्ववेदे तावदाधिभौतिकाधिदैविकविषये चर्चाबाहुल्यं दृश्यते। सुविदितमस्तु यत् प्रसङ्गेन पुराणेतिहासविषयमवलम्ब्याचार्यपरीक्षोत्तरणानन्तरं मम गवेषणाविषयः--'पुराणेषु भूगोलविमर्शः' इति स्वीकृतोऽभूत्। परं संयोगेनास्य विश्वविद्यालयस्य तात्कालिकोपकुलपतीनां डॉ० गौरीनाथशास्त्रिमहाशयानां परम्परागताऽथर्ववेदान्तर्गतराजनीतिविषयकगवेषणार्थमाग्रहो जातः। ततश्च सर्वेऽपि श्रोत्रिया विद्वांसो जानन्त्येव यन्मम पूज्यैस्तातपादैर्लुप्तप्रायस्याऽथर्ववेदस्य महता कष्टेनाऽध्ययनं सम्पाद्य पुनस्तस्य प्रचारप्रसारौ विहितौ।

चरणव्यूहादिमतेनाऽथर्ववेदस्योपवेदोऽर्थशास्त्रं ( राजशास्त्रं ) वर्तते। अस्मिन्नेव सन्दर्भे परमादरणीयानां श्रीमतां डॉ० आदित्यनाथझामहोदयानां, डॉ० सम्पूर्णानन्दमहाभागानां, डॉ० गौरीनाथशास्त्रिमहाशयानां च प्रेरणया प्रोत्साहनेन सुयोग्यनिर्देशकस्य व्यवस्थापनेन च विषयेऽस्मिन् मम प्रवृत्तिर्जागरिता।

सहेतुकस्य कार्यस्यास्य यत्किञ्चिदपि साफल्यं तदनेकमतानुवर्तिनां विदुषां ग्रन्थसाहाय्येनैव सम्पन्नं येषां निर्देशः सहायकग्रन्थसूच्यां वर्तत एव। यद् वैगुण्यं तत् सर्वं ममैव। अतः प्राच्यविद्याविदः प्रतीच्यविद्याविदश्चापि विपश्चितः प्रायशः पूर्वोत्तरपक्षित्वेनास्य प्रबन्धस्य प्रेरकाः सन्ति।

निबन्धेऽस्मिन् मया केवलम् अथर्ववेदस्य शौनकीयसंहितायां क्वचिद् गोपथब्राह्मणे च सम्प्राप्तानां राजनीतिसंकेतानाम् ऋगादिवेदानां भाष्यकाराणां पूज्यानां सायणाचार्यादीनां विचाराणामुपयोगस्य मनुभीष्मादीनां सप्ताङ्गविवेचनस्य च प्रयासः कृतोऽस्ति। सन्दर्भेऽस्मिन् 'प्राचीन भारत में जनतन्त्र', 'प्राचीन भारत में राज्य और न्यायपालिका', 'अथर्ववेद सुबोध भाष्य' इत्यादिग्रन्थलेखकानां महोपकारान् स्वीकरोम्यहम्। प्रबन्धग्रन्थे प्राय उपर्युक्तग्रन्थेभ्य एवोद्धरणानि गृहीतानि सन्ति।

कार्येऽस्मिन्नुपर्युक्तानां ग्रन्थकाराणां विचाराः क्वचिद् विस्तरशः क्वचिच्च संक्षेपतः संगृहीताः, क्वचिन्मौलिका विचारा अपि प्रस्तुताः सन्ति। विशेषेणास्य प्रबन्धस्य संरचनायां तस्य प्रकाशने च येषां महानुभावानां गुरुजनानां सहायकानां च साहाय्यमहं लब्धवान् तेषु पूज्यानां विद्वद्वरेण्यानां लब्धान्ताराष्ट्रियख्यातीनाम् अनुसन्धानसंस्थाननिदेशकानां डॉ० भागीरथप्रसादत्रिपाठी 'वागीशशास्त्रि'-महोदयानामहं कृतज्ञोऽस्मि, येषां सस्नेहपरामर्शेन सहयोगेन च मम कार्यपूरणे सौकर्यं जातम्।

पदवाक्यप्रमाणपारावारीणानां देशे विदेशे च लब्धकीर्तीनां विशेषेण पद्मविभूषणादिराष्ट्रपतिपुरस्कारभाजां भू० पू० साहित्य-तन्त्रविभागाध्यक्षाणां

मम समादरणीयानां पण्डितराजपट्टाभिरामशास्त्रिमहोदयानां सम्यङ्निर्दशनेन कठिनतरश्रुतितत्त्वावबोधनेन सोत्साहं प्रेरणया च मादृशो मतिमन्दोऽपि शोधग्रन्थमिमं प्रस्तुतवान्। एतदर्थमहं केवलं तच्चरणारविन्दयोः प्रणतोऽस्मि।

एवमेव यैः पूज्यैर्निर्व्याजस्नेहेन ममास्मिन् कर्मणि स्वसमयाभावमगणयित्वा पुस्तकादिप्रदानेन सत्परामर्शेन च साहाय्यमाचरितं तेषां पण्डितवर्याणां श्रीमच्छेषराजशर्म(रेग्मी)णां तथा च मन्मित्राणां डॉ० दिनेशचन्द्ररेग्मीमहाभागानां चोपकारेण यावज्जीवं कार्तज्ञ्यमावेदयामि। यैः प्रबन्धलेखनार्थं स्थानप्रदानेन साहाय्यं कृतं तेषां वेदकर्मकाण्डप्रवीणानां श्रीयुतगणेशनारायणपाळन्देमहोदयानां चोपकारं स्मरामि। विशेषतः प्रकाशनाधिकारिणो डॉ० हरिश्चन्द्रमणित्रिपाठिन आभारमभिव्यनज्मि यदीयेन सत्प्रयासेन ग्रन्थोऽयमाशु प्राकाश्यमुपगतः।

अपि च पूर्णत औदासीन्यमास्थितेऽपि मयि प्रबन्धप्रकाशनार्थं मुहुर्मुहुः प्रेरकाणां सुयोग्यानां श्रीवल्लभदासशाहानामथ च डा० गजाननशास्त्रिमुसलगाँवकराणां, डा० रमाशङ्करमिश्राणां च विविधसाहाय्येनोपकृतोऽस्मि। अतस्तेषां सर्वेषां कृते कृतवेदितामावेदयामि।

गवेषणाप्रबन्धस्य प्रस्तुत्यनन्तरं मुद्रणं यावद् दुर्दिष्टेन नैकविधैरनिवार्यान्तरायैर्ममायोग्यतया च विभिन्ननेत्राङ्गुलिभिर्भुक्तत्वाच्छोधप्रबन्धस्यास्य टङ्कितप्रतिकृतेः स्वरूपं प्रायो विलुप्ततां गतम्। षोडशपृष्ठमुद्रणानन्तरमसम्पादितत्वादग्रिमटङ्कितप्रतिरूपस्य मुद्रणमेवावरुद्धम्। अन्ततो गत्वा कृपावतां श्रीमतां वागीशशास्त्रिमहाभागानां सत्परामर्शाच्छ्रीमद्विद्यानन्दमुद्गलमहोदयानां साहाय्येन ख्यातिमभजमानस्य व्यक्तिविशेषस्य कृपया कथञ्चिदस्याः सम्पादनं संजातम्। तदनु च शोधप्रबन्धोऽयं महाकान्तमुद्रणालये मुद्रितः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन प्रकाशितश्च।

ग्रन्थेऽस्मिन् मुद्रणदोषप्राचुर्येऽहमेव हेतुः। अतः कृपालुपाठकानां प्रकाशकानां च पुरतः क्षमां प्रार्थये। सर्वे ते कृपालुमहोदया हार्दिकधन्यवादार्हा येषां साहाय्येन शोधप्रबन्धोऽयं ग्रन्थरूपतामावहति।

विदुषां वशंवदः
**विनायकरामचन्द्ररटाटे**

## उपोद्घातः

विदन्ति धर्मार्थकाममोक्षानेभिरिति वेदाः । विद ज्ञाने-इति धातोः हलश्च इति सूत्रेण करणे घञ् । विन्दते भोगापवर्गावेभिरिति वेदाः । विद विचारणे— इति धातोर्घञ् । विन्दन्ते धर्मार्थकाममोक्षान् एभिरिति वेदाः । विद्लृ लाभे-इति धातोर्घञ् । इत्थं वेदपदं व्युत्पाद्यते । वेदस्य लक्षणं यथा—

प्रत्यक्षेणाऽनुमित्या वा यस्तूपायो न बुध्यते ।
एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता ।।

'अपौरुषेयं वाक्यं वेदः' इति सायणाचार्येणास्य लक्षणं व्यधायि । तत्र वेदविषये सामान्यतो बहूनां जनानामेतादृशो विमर्शो वर्तते यदत्र पारलौकिकविषयस्यैव प्रतिपादनमस्ति न त्वैहिकविषयस्य । वस्तुस्थितिरेतद्विपरीतैव । परं यथार्थत ऐहिकपारलौकिकादिसमस्तविषयेष्वस्माकं मार्गदर्शको वेद एव ।

भारतवर्षीयैर्दार्शनिकशिरोमणिभिर्गौतमकणादादिभिर्वेदस्य प्रामाण्यं विना विरोधमुररीकृत्य तदाधारेणैव स्वस्वदर्शनानि व्यरच्यन्त । किंबहुना, ईश्वरसत्तां खण्डयद्भ्यां कपिलजैमिनिभ्यामपि वेदप्रामाण्यं स्वीकृत्यैव तदनुसारेण स्वस्वदर्शने निरमायिषाताम् । अपि च वेदप्रामाण्यं खण्डयद्भिर्बौद्धादिभिरपि वेदप्रतिपादिताऽऽचारपद्धतिरक्षुण्णा स्थापिता । अस्माकं धर्मग्रन्थत्वेन सम्मता वेदा न केवलं धर्मस्यैव प्रतिपादकाः प्रत्युत ज्ञानविज्ञानयोः क्षेत्रेऽपि पूर्णरूपेण प्रतिष्ठातारः । नात्र विषये काचिद् विप्रतिपत्तिः । दुःखस्य विषयोऽयं यद्—

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ।। मनु० २।१६८ ।
वेद एव द्विजातीनां निःश्रेयसकरः परः । याज्ञव० १।१४ ।
न कश्चिद्वेदकर्ता स्याद्वेदस्मर्ता चतुर्मुखः ।
वेदो नारायणः साक्षात्स्वयम्भूरिति शुश्रुम ।। पराशरस्मृतिः ।

इत्यादिवचननिचयेषु जागरूकेष्वपि वयं तावद्वेदानामङ्गोपाङ्गव्याकरणन्यायादिविषयाध्ययनेनैवाङ्गिज्ञानविरहितान् स्वान् कृतकृत्यान् मन्यामहे ।

वैदेशिका विद्वांसः समयार्थव्ययमगणयित्वा वेदविषये नवं नवं विषयमुद्घाटयन्ति, तदाधारेणैव च स्वस्वाभिमतविषयप्रचारं विदधति । वयं तावत् स्वपूर्वजदायमुपेक्ष्य गजनिमीलिकां कुर्मः । आश्चर्यं किमतः परम् ।

वेदेषु तावद् आध्यात्मिका आधिभौतिका आधिदैविकाश्च विषया यत्र तत्र प्रकीर्णाः समुपलभ्यन्ते । आत्मानात्मपरमात्मसम्बद्धा आध्यात्मिकाः भूगोलखगोलादिसम्बद्धा आधिभौतिकाः, हौत्राध्वर्यवौद्गात्रब्राह्मसम्बद्धा यज्ञयागादयस्तत्तद्देवोपासनासम्बद्धाश्च विषया आधिदैविकाः सन्ति । तद्यथा—

वेदादिग्रन्थेषु प्रायः पुरुष-वृक्ष-रथ-नौका-गो-श्येनादिरूपकाण्यवलम्ब्य ब्रह्मात्मप्रकृतिपुरुषादिपारमार्थिकपदार्थानां सृष्टिस्थपृथिव्यन्तरिक्षद्युस्थानानामैहिकबौद्धिकविषयाणां व्यवहाराणाञ्च प्रबोधनस्य पर्याप्तान्युदाहरणानि लभ्यन्ते। पुरुषविषये पुरुषसूक्तं प्रसिद्धमुदाहरणमस्ति। साङ्गवेदपुरुष-यज्ञपुरुष-कालपुरुषादीनामिव राजनीतिपुरुषोऽपि वक्तुं शक्यते[1]। उपासनाया ध्यानविधावेतेषामुपयोगो भवति। विषयोऽयं कर्मकाण्डीयः।

अथ च पृथक् पृथक् सम्मिलितानां वा वाक्-प्राण-मनसां, यज्ञस्य, अग्नेः, वेदत्रयी[2]त्रिलोक-त्रिवर्णानाम् अग्निवायुसूर्यरूपत्रिदेवानाम्, कफवातपित्तात्मकत्रिधातूनाम्, अकाराद्युदात्तादित्रिस्वराणाम्, त्रिगुणादीनां च विभिन्ना नैकविधा गहनार्था वेदेषु प्रतिपादिताः सन्ति। ईदृशानामनेकशब्दानामाश्रयेण समस्तब्रह्माण्डे कालत्रये सम्पद्यमानानां व्यवहाराणां विद्यानां कलादीनां च वर्णनं लभ्यते। तत्रापि विशेषेण त्रय्यामनुक्तानामुच्छिष्टानाम् ( अवशिष्टानाम् ) ऋगादित्रयाणां सारभूतः सरसश्चायमथर्ववेदो वर्तते। अत एवायं वेदेषु चूडामणिश्चतुर्षु वेदेषु ब्रह्मेति पदं चालभत। मन्ये, अत एवायं स्ववैलक्षण्येन विविधाभिधानानि प्राप्तवान्। अस्योपवेदानामपि नास्ति निश्चिता गणना, इदमेवावलम्ब्याग्रे क्वचिदथर्ववेदानुसारेण क्वचिच्च त्रय्यनुसारेण किञ्चिद्विविच्यते।

कौटिल्यानुसारमर्थशास्त्रं राजनीतिरेव। अथर्ववेदे राजनीतिप्रतिपादकोऽयं ग्रन्थो भवतां पुरस्ताद् वर्तते एव।

वास्तुशिल्पस्थापत्यकलानामप्यर्थवेदस्योपवेदत्वेन ग्रहणं भवति। यद्यप्युपर्युक्ता विषयास्त्रय्यामपि लभ्यन्ते, तथाप्यथर्ववेदे तेषां स्वतन्त्ररूपेण मौलिकं वर्णनं श्रूयते। यथाथर्ववेदस्य शालासूक्तद्वयम्[3], वास्तुसूत्रोपनिषच्च महत्त्वपूर्णा वर्तते। गृहवापीकूपतडागमण्डपादीनां निर्माणविधिः, टङ्कनच्छेदनचित्राङ्कनभूम्यादिमापनादीनाम्, निर्माणसहायकानां यन्त्राणाम्, गृहादिनिर्मातॄणां वास्तुशिल्पाचार्याणां च स्थले स्थले वर्णनमस्ति।

वेदेषु शिल्पशब्दमवलम्ब्य श्वेतकृष्णरक्तवर्णानां, गीतादीनां, रूपस्य च वेदत्रय्यात्मकतया कृष्णाजिनमिषेण यज्ञान्तर्गतो विचारो लभ्यते। यथा शतपथे[4] तस्य यानि शुक्लानि च कृष्णानि च लोमानि तान्यृचां च साम्नां च रूपम्। यानि शुक्लानि तानि साम्नां रूपम्, यानि कृष्णानि तान्यृचाम्। यदि वेतरथा—यान्येव कृष्णानि तानि साम्नां रूपम्, यानि शुक्लानि तान्यृचां यान्येव बभ्रूणीव हरीणि तानि यजुषां रूपम्॥ २॥ सैषा त्रयी विद्या यज्ञः। तस्या एतच्छिल्पम्—एष वर्णः। तद्यत् कृष्णाजिनं भवति। इति। कौशिकब्राह्मणादिषु—'त्रिविद्वै शिल्पं नृत्यं गीतं

---

१. अस्य निबन्धस्य पृ० ५६।

२. 'ऋग्यजुःसामाथर्वाणि' 'ऋक्सामयजुरेव' अनयोः पाठयोर्वर्तते किमपि महत्त्वम्।

३. ३।१२; ९।३।

४. १।१।४।२-३।

वादित्रम्' इति पठ्यते। कथासरित्सागरे--'एतद्धि दिव्यं शिल्पं न मानुषम्' इत्युल्लिखितं वर्तते। वैदिकवाङ्मयेऽपि बहुत्र दैवमानुषमिति भेदद्वयस्योल्लेखेनानुमीयते यत् संगीतादिष्वपि मार्गं (पारमार्थिकं) देशी (लौकिकं) चेति द्वे संज्ञे उपर्युक्तस्यैवानुकरणमिति। तैत्तिरीयब्राह्मणादिषु—'यत्ते शिल्पं', 'यत्ते शिल्पं कश्यपरोचनावत्' इत्यादिवचनेषु शिल्पाचार्याणामुल्लेखः। यजुर्वेदसंहितायां काठकसंहितायां मैत्रायणीसंहितायां शतपथे च—'ऋक्सामयोः शिल्पे स्थस्ते'[1], 'ऋक्सामयोर्हते रूपे' इत्यादीनि वचनानि शिल्पस्य महत्त्वप्रतिपादकानि सन्ति।

ह्यायुर्वेदे गोपथब्राह्मणे चाथर्ववेदस्य चिकित्साभैषज्ययोरुपवेदत्वेनोल्लेखोऽस्ति, तदनुसारेण वेदेऽस्मिन् चिकित्साप्रकाराणां, नानाविधौषधिवनस्पतीनां,तत्प्रकाराणां च समग्रं मौलिकमध्ययनं वैपुल्येन लभ्यते। एवमेव वेदोऽयमागमस्य योग-तन्त्रस्य चोद्गमस्थलं तेषामाकरश्च चिराच्छ्रूयते स्मर्यते च। अथर्वसंहितायां तदुपनिषत्सु ब्रह्मरूपिण्याः परमशक्तिसम्पन्नायाश्च विराजो वाग्देव्याश्च जाज्वल्यमानं महत्त्वं दृश्यते। विषयस्यास्य विस्तार आथर्वणरहस्याथर्वणसौभाग्यकाण्डान्तर्गतेषूपनिषत्सु शाक्तस्तोत्रेषु च व्यज्यते। वेदस्यास्य ज्योतिषविषयेऽपि महत्त्वपूर्णमवदानं वर्तते। 'चित्राणि साकम्', 'यानि नक्षत्राणि'[2]इत्यादीनि सूक्तानि तथा च नैकविधेषु स्थलेषु स्थिता मन्त्राश्च ज्योतिषविषयोपकारकाः सन्ति।

वेदेषु नाट्यस्य[3] निगमागमानुयायिनोर्गान्धर्व[4]संगीतयोश्च [5]मूलं स्पष्टतयोपलभ्यते। भरतेन नाट्यशास्त्रे नाट्यस्य येषां चतुर्णां तत्त्वानां गान्धर्वस्य स्वरतालपदत्रयाणाञ्चोल्लेखः कृतः, तन्मूलमस्यामृचि व्यज्यते—

**ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु।**
**ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः॥**

ऋ० १०. ७१. ११।

यद्यपि सायणादिना वेदचतुष्टयस्य हौत्रादिकर्मचतुष्टयस्य च सिद्ध्यर्थमस्य मन्त्रस्योपयोगः कृतस्तथाप्युपर्युक्तनाट्यशास्त्रीयवचनानुसारमप्यस्यार्थः कर्तुं शक्यते। अर्थान्नाट्ययज्ञ(रङ्ग)मण्डपोपजीव्यभूते श्रौतयज्ञमण्डपे यथा होता शंसति, उद्गाता गानं करोति, अध्वर्युश्चाध्वर्यवं करोति। तथा चाथर्ववेदिनो

---

१. यजु० ४. ९।     २. अथर्व० १९।७–८।

३. जग्राह पाठ्यम् ऋग्वेदात्सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि॥ ना० शा० १. १७।

४. गान्धर्वं त्रिविधं प्रोक्तं स्वरतालपदात्मकम्। तत्रैव २८–११।
अपि च सामध्यानं यथा—तस्य ह वा एतस्य साम्न ऋगेवास्थीनि।
स्वरो मांसानि स्तोभा लोमानि॥ इति॥
सामविधानब्राह्मणे १।१।१०।

५. गीतं वाद्यं तथा नृत्यं (नृत्तं) त्रयं संगीतमुच्यते। संगीतरत्नाकरे १।२१।

ब्रह्मत्वं सम्पद्यते। तथैवात्र मन्त्रस्थम् ऋचामिति पदं पाठपदात्मकं, गायत्रं गायति चेति पदद्वयं गीतस्वरात्मकम्, मात्रां[1] मिमीत चेति पदद्वयमभिनयतालात्मकं[2] तथा चाथर्वप्रतिनिधिभूतमानन्दरूपं ब्रह्मपदमुपर्युक्ततत्त्वत्रयस्य सारभूतं रसात्मकतत्त्वमिति बोद्धव्यम्।

यद्यपि रसविषये दर्शनसाहित्यायुर्वेदपाकशास्त्रादिविषयानवलम्ब्य विद्वद्भिश्चिन्तकैश्च पर्याप्तोहापोहः कृतोऽस्ति, तथापि सामान्यतः स्थूलदृष्टचा मन्ये रसो द्विविधः। प्रथमो भावात्मको बुद्धिग्राह्यश्च वर्तते, यो दर्शनसाहित्यसंगीतादिष्वनुभूयते। अपरो जलात्मको रसनेन्द्रियग्राह्यश्च वर्तते, यो जलौषधिवनस्पतिजन्यभोजनपानेष्वनुभूयते। विचारे कृते सत्युपर्युक्तस्योभयविधस्य रसस्य सार्थकत्वं सरस्वतीशब्दे भवति। अस्तु। अत्र रसस्याथर्वमूलकत्वं कथमिति प्रश्नः। अथर्ववेदस्यैकमभिधानमाङ्गिरसमपि वर्तते तथा चाथर्ववेदस्य देवता चन्द्रमाः, यस्योत्पत्तिर्मनसः श्रूयते। रसात्मकसोमस्यान्तरिक्षस्थचन्द्रमसश्चाह्लादकत्वं प्रसिद्धमेव। इत्थं नाटचस्य गान्धर्वस्य च वेदमूलकत्वं तत्रापि विशेषतो रसस्याथर्वमूलकत्वं समासेन सहजमेव सिद्धम्।

गीतवाद्यनृत्यात्मकसंगीतशास्त्रस्य कथं वेदमूलकत्वमिति सन्दर्भे खल्वागमोपजीव्यस्याथर्ववेदस्यैको मन्त्रः पुरः स्थाप्यते—

यस्यां गायन्ति नृत्यन्ति भूम्यां मर्त्या व्यैलबाः।
युध्यन्ते यस्यामाक्रन्दो यस्यां वदति दुन्दुभिः॥ अथर्व० १२.१.४१।

एवमेव संगीतस्य विभिन्नसम्प्रदायेषु विविधानां गीतवाद्यनृत्यतालादीनां ये सप्रकारप्रयोगाः शास्त्रेषु लोकेषु च दृश्यन्तेऽनुभूयन्ते च तेषां स्रोतो वेद एव विज्ञायते। नृत्तविषये[3] यथा—नृत्ताय सूतमिति पदं कथकनृत्यस्योपजीव्यं वक्तुं शक्यते।

इत्थमथर्ववेदेन सह ऋग्यजुःसामवेदानां च प्रायः समस्तक्षेत्रेषु प्रामुख्यं वर्तते।

---

१. नियमितेनोपयुक्तेन च मानेन परिमाणेन त्रायते रक्षति सा मात्रा। अग्न्याहुत्यामायुर्वेदपाकशास्त्रसंगीतादिषु मात्रायाः प्रयोगः परिमाणं च सर्वविदितमेव।

२. 'यजुः पुरस्तादेति अभिनेतेव' श० ब्रा० १।१।१।४। प्रसङ्गेऽस्मिन् सायणेनोल्लिखितं वर्तते यद्यजुर्मन्त्रः ऋक्सामभ्यां प्रथमं रसानयनाय गच्छतीति। अनेन सिद्धचति यद्यजुर्वेदाश्रिताभिनयनाटचनृत्तनृत्यच्छन्दस्तालैरेव रसपोषणं रसानुभवश्च भवतः। क्वचिन्नाटचं यजुर्वेदस्योपवेदत्वेनोक्तः। तद्यथा—

गान्धर्वः सामवेदस्य, उपवेदो यथा स्मृतः। स्मृतिर्यथा चोपवेदः ऋग्वेदस्येह पठचते॥
नाटचं यथोपवेदश्च यजुर्वेदस्य पार्थिव। तथोपवेदोऽथर्वणः चिकित्सितमिह स्मृतम्॥
हयायुर्वेदे १।६।२५–२६।

अपि च, यजुर्वेदाभिनययोरुपजीव्योपजीविसम्बन्ध आलङ्कारिकैर्विज्ञात आसीत्।

३. यजु० ३०।६।

एवमेव वैदिकवाङ्मये वर्तमानवैज्ञानिकप्रयोगाणां बहुत्र सङ्केता वर्तन्ते। तथैव सम्प्रति बहुचर्चितस्य परिकलकस्य ( कम्प्यूटरस्य ) पर्याप्तान्युदाहरणानि लभ्यन्ते। वैदिकैः स्वग्रन्थस्थविविधखण्डानां ग्रन्थगतमन्त्राणां वाक्यानां पदानां विभिन्नदेवर्षिच्छन्दसां च सुस्मरणार्थमनुक्रमणिकानां रचना विहिता। संहिता-ग्रन्थानामनुक्रमणिकास्तु प्रायः प्रसिद्धा एव। तथैव शिक्षादिषडङ्गानामन्ते शृंखला ( 'साखळी'ति मराठीभाषायाम् ) लभ्यते, यथा—अथ शिक्षामात्मोदात्तश्च हकारं स्वराणां यथासौ ··· इत्यादि। पद्धतिरियं ग्रन्थस्थखण्डपादाध्यायादीनां भागानां सुनिश्चितरूपेण सर्वदा स्मरणार्थमुपकारिका भवति। पुराऽनध्यायदिवसेषु वैदिकाध्यापकाश्छात्राश्च ग्रन्थान् कण्ठस्थीकर्तुं मनोरञ्जनपूर्वकं लीलयैव ग्रन्थ-स्थपदानां स्वरव्यञ्जनवर्णानां च विविधा अनुक्रमणिका विरचयन्ति स्म सम्मिल्य प्रश्नोत्तरपद्धत्या परस्परं चर्चयन्ति स्म च तं विषयम्।

ननु 'अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेदः···' इति। अपि च—

अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।
दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्॥ मनु० १,२३।

एवं च—'स्त्रियामृक् सामयजुषी इति वेदास्त्रय·····', 'श्रुतिः स्त्री वेद आम्नायस्त्रयी···' इत्यादि। इत्थं च त्रयो वेदा यत्र तत्र श्रूयन्ते, कोऽयं तुर्यो वेदा यस्याऽथर्वेति समाख्या इति शङ्का निराधारा, यतः—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आ विवेश॥

अत्र चत्वारि शृङ्गा इत्यतो वेदचतुष्टयं बुद्ध्यते। चतुर्थोऽथर्ववेदः। एवमेव—ऋचां त्वः पोषमास्ते ( ऋ० १०. ७१. ११ ) इति। अत एतन्मूलकमेव—'ऋग्वेदं भगवोऽध्येमि·····' इति। त्रयीति कथनेन वेदानां रचनाशैल्येव पद्यगद्यगीतिरूपा परिलक्ष्यते, यत्राऽथर्वणोऽप्यन्तर्भावो भवति। अतो न वेदानां त्रित्वम्।

महाभाष्यकारेणाऽपि—'नवधाऽथर्वणो वेदः' इति पस्पशाह्निक उट्ट-ङ्कितम्। तथा च शौनकीये चरणव्यूहेऽपि त्रयीचरणचर्चासमनन्तरं तुरीयायाः श्रुतेः—

द्वादशानि सहस्राणि मन्त्राणां त्रिशतानि च।
गोपथं ब्राह्मणं वेदेऽथर्वणे शतपाठकम्॥

इत्थं मन्त्रव्यूहो दर्शितः। तथा च भगवता शौनकेन वेदाभ्यासस्य पाञ्च-विध्यं प्रदर्शितम्। तद्यथा—

वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः।
तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा॥[1] इति।

---

१. पुराणगत वेदविषयक सामग्री—एक अध्ययन पृ० ४३४।

अतो मयाऽपि स्वमत्यनुसारेण निर्देशकादिगुरुजनानां कृपया च विचाररूपं वेदाभ्यासमवलम्ब्य 'अथर्ववेदे राजनीतिः' इति विषये लेखनी व्यापारिता।

तत्र सामान्यतो वेदोत्तरवर्तिमनुभीष्मकौटिल्यादीनां राजनीतिशास्त्रविषयका ग्रन्था विचाराश्च पठ्यन्ते, तथैवाधुनिकविदुषां भारतीयानां वैदेशिकानां च प्रचुरं विषयसम्बद्धसाहित्यं प्रलभ्यते सौकर्येण। तेष्ववलोकितेष्वपि यथार्थतः सन्तोषो नैव जायते यतो हि विषयस्यास्य मूलतोऽध्ययन एव न्यूनता प्रतीयते। यद्यपि कैश्चिद् विचारकैर्भ्रमनिवारणस्य प्रयत्ना विहितास्तथापि बहुमतेन 'अन्धेनैव नीयमाना यथान्धाः' इत्येव चरितार्थ्यंते। तादृशानां विचारकाणां प्राय इदमेव मतं श्रूयते यद् राजनीतेः प्रारम्भो यवन (यूनान) देशादेव पुर(पोलिस[1], पालिटिया)माश्रित्य जात इति। तथैव राजनीतिशास्त्रस्य तत्सम्बद्धशासनानां च विकासो भारताद् बहिरभूत्। वस्तुत इदं न। येन केन प्रकारेण तेषां विषयाणां दर्शनं वेदेषु जायते, क्वचिन् सूत्ररूपेण क्वचिच्च विस्तरेण।

वैदिकराजनीतेर्मुख्योद्देश्यमनुशासनपूर्वकं राष्ट्रे (राज्ये) शान्तिसंरक्षणयोः सुव्यवस्थापनं वर्तते। वेदेषु साङ्कुशशासनतन्त्रं किमुत लोकतन्त्रमाश्रित्य सर्वेषामधिकारानुसारेण समादरः, स्वस्वाधिकारकर्तव्ययोः पालनं कुशलतरं जीवनयापनम्, सर्वेषां मङ्गलम्, सुविचारः, सम्भूय समुत्थानम्, स्वावलम्बनम्, नीत्याचरणम्, सम्पन्नत्वम्, राष्ट्रियत्वं सामाजिकत्वं च दृश्यते। तत्कथं वक्तुं शक्यते यद् वेदेषु राजनीतेरभाव इति। अत एवायमभावरूपदोषनिरसनार्थमस्य प्रबन्धस्य लेखनोपक्रमः। अतोऽग्रे तस्यैव सप्ताध्यायपरिमितस्य गवेषणाप्रबन्धस्य संक्षिप्तं विवरणं पुरःस्थाप्यते—

**प्रथमाऽध्याये**—विषयप्रवेश इति शीर्षकमवलम्ब्याष्टादशविद्यान्तर्गताऽथर्ववेदस्य सम्पूर्णं वाङ्मयम्, शाखाभेदाः, संक्षेपेण अथर्ववेदीयराजनीतिसम्बद्धा चर्चा, अथर्वशब्दव्युत्पत्तिः, अथर्वणो जन्मादिपरिचयः, तथैव भृग्वङ्गिरआदीनां सङ्केतः, समासेन राजनीतिशास्त्रशासनधर्माणां तत्सम्बद्धानामितिहाससमाजशास्त्रादीनां तुलनात्मको विचारश्च। वैदेशिकानां भारतीयसंस्कृतिनाशचेष्टा, भारतीयसंस्कृतेराधारः, कौटिल्यस्याऽथर्वशाखीयत्वानुमानपूर्वकवैदिकराजनीत्यन्वेषणोपक्रमः, ऋतस्य महत्त्वं तस्याधिकारी चेत्यादयो विषया विवेचिताः।

**द्वितीयाध्याये**—राजराज्याऽवलम्बभूतं विराट्पदं पुरस्कृत्य राजपरिभाषा, तदुत्पत्तिर्देवादिसिद्धान्तविवेचनं, राज्याभिषेकः, राजपुरोहितयोः संवादादिश्च वर्णितः। अत्रैव राज्यस्य परिभाषा एतत्सम्बद्धानामाधुनिकानां मतानि च प्रस्तुतानि। अराजवैराज्यादिविचारः, राज्यस्य मूर्तिमत्त्वम्, चत्वारि मूलतत्त्वानि एतेषां विचारश्च। राज्यस्योत्पत्ती राज्योपजीव्यपुरस्य 'त्रिपुरस्य' च वेदमूलको विमर्शश्चोल्लिखितः।

**तृतीयाध्याये**—राज्यविभागमाश्रित्य राज्याधिकारिणां रुद्रवस्वादित्यमित्र-वरुणेन्द्रानां विभागपरिचयः। अत्रैव 'रत्नि'-पदमवलम्ब्य मन्त्रिपुरोहितादय-

1. राजनीतिशास्त्र पृ० २।

श्चर्चिताः। अग्निना सह पुरोहितस्य तुलना, गुप्तचारिता चेत्यादयो विषयाः प्रतिपादिताः।

**चतुर्थाध्याये**—'सभासमिति'–विषयमवलम्ब्य विविधानां शासकीयसामाजिकादिसङ्घटनसंस्थानां विकासस्तासां परिचयश्च, विशेषेण संसदो वेदमूलकत्वं प्रतिपादितम्।

**पञ्चमाध्याये**—न्यायं नीतिं च पुरस्कृत्य नीतिभेदान् सामदानादीनि च संक्षेपेण प्रदर्श्य विविधा दण्डा व्यावहारिकनीतयः, करास्तेषामुपयोगादयश्च विवेचिताः।

**षष्ठाध्याये**--पुनर्विस्तरेण पुरम्, तन्निर्माणसाधनानि तद्भेदाः, जनपदादयश्चर्चिताः।

**सप्तमाध्याये**--समाजमवलम्ब्य विराड्यज्ञाग्निसमाजसंघटकमिथुनविवाहपरिवारार्थव्यवसायशिक्षादीन् प्रदर्श्य वैदिकसमाजस्य नैतिकोत्कर्षः प्रदर्शितः।

कार्येऽस्मिन् येषां साहाय्यं लब्धं तेभ्यः पितृगुरुसहयोगिभ्यो नमः। अनेन लब्धज्ञानेन राष्ट्रदेवो वेदपुरुषः परमेश्वरश्च प्रीयन्तां न मम। इति शम्।

वसन्तपञ्चम्याम्
२०४५ विक्रमाब्दे

विदुषां मातृभूमेश्च किंकरः
विनायक रामचन्द्र रटाटे

## मङ्गलाचरणम्

श्रुतिस्मृत्यात्मकौ पूज्यौ सीतारामौ गुणान्वितौ ।
जननीजनकौ नत्वा निबन्धोऽयं विरच्यते ॥ १ ॥

आद्यामाद्यं जगद्बीजमग्नीषोमात्मकं तथा ।
गणसंचालकं वन्दे नेतारं श्रीविनायकम् ॥ २ ॥

पट्टाभिरामवागीशशेषराजादिदर्शितम् ।
विराजं समुपस्थाप्य वेदनीतिरुदीर्यते ॥ ३ ॥

आदर्शत्वेन विदुषामनुकार्यतया स्थितम् ।
यत्राऽग्निवरुणादीनां भव्यं वृत्तं प्रकीर्तितम् ॥ ४ ॥

विशुद्धशासनार्थं वै, ऋतं यत्र प्रतिष्ठितम् ।
यत्र तत्राऽपि यस्यैव कामधुक्त्वं प्रकीर्तितम् ॥ ५ ॥

सर्वकल्याणभावेन सम्भूयोत्थानपोषकः ।
समानचित्तकार्याणां लोकतन्त्रस्य दर्शकः ॥ ६ ॥

निर्व्यलीकेन भावेन सर्वेषामुपकारकः ।
वेदोऽसौ सर्वतो ग्राह्यः सायणादिसुसेवितः ॥ ७ ॥



# विषयानुक्रमणिका


| | |
|---|---|
| प्रथमोऽध्यायः—विषयप्रवेशः | १—३४ |
| अष्टादशविद्यानिरूपणम् | १ |
| अथर्ववेदस्य वाङ्मयम् | २ |
| अथर्वणश्शाखाभेदाः | ३ |
| अथर्ववेदस्याङ्गाद्युपग्रन्थाः | ,, |
| अथर्ववेदे राजनीतिसम्बद्धा चर्चा | ५ |
| अथर्वशब्दव्युत्पत्तिः | ७ |
| अथर्वणो जन्मादिविषयचर्चा | ,, |
| अथर्वणः कर्तृत्वम् | १० |
| अथर्वण आत्मपरिचयः | ११ |
| अङ्गिरःपरिचयः | १२ |
| अथर्वाङ्गिरसः, भृग्वङ्गिरसः | १३ |
| ब्रह्मवेदः | १४ |
| राजनीतिशास्त्रस्योद्गमे मतभेदाः | ,, |
| राड्विराड्शब्दविचारः | १५ |
| राजशब्दसम्बद्धानां धर्मशासनादीनां विमर्शः | ,, |
| दण्डनीतिः | १६ |
| ऋग्वेदे दण्डचर्चा | १७ |
| अर्थशास्त्रविचारः | १८ |
| राजविज्ञानादिशब्दविचारः | १९ |
| एकायनम् | ,, |
| राजनीतेः शास्त्रान्तरेण सह सम्बन्धः | २० |
| वैदेशिकानां भारतीयसंस्कृतिनाशचेष्टा | २१ |
| भारतीयसंस्कृतेराधारः | २२ |
| कौटिल्यस्याथर्वशाखीयत्वम् | ,, |
| वैदिकराजनीत्यन्वेषणे विमर्शनीया विषयाः | २३ |
| वैदिकशासनचर्चा | २४ |
| वैदिकशासनस्य मूलम् ऋतम् | २५ |
| ऋतस्याधारः | ,, |
| निर्ऋतिः | २६ |
| ऋतसत्ये | २७ |
| प्रशासनीयविभागाः | २८ |
| सर्वोच्चाधिकारी वरुणः | ,, |
| सहयोगिभिः सह वरुणः | २९ |
| शासनस्य प्रमुखा विभागाः | ३० |
| शासनम् | ३१ |
| शासनस्य पर्यायाः | ३२ |
| शासनस्यावश्यकता तस्य महत्त्वं च | ,, |
| निष्कर्षः | ३४ |
| द्वितीयोऽध्यायः— | ३५-६६ |
| राज्ञ उत्पत्तिर्गुणः कर्माणि तस्य वरणमभिषेकश्च | ३५ |
| विराट् | ३६ |
| गार्हपत्यः | ३७ |
| आहवनीयः, दक्षिणाग्निः | ३८ |
| राज्ञः परिभाषा | ३९ |
| को राजा भवितुं शक्नोति | ,, |
| राज्ञ उत्पत्तिः | ,, |
| निर्वाचनम् | ४१ |
| राज्याभिषेकः | ४४ |
| राज्यस्थैर्यकामना | ४५ |
| अभिषेके राजपुरोहितयोः संवादः | ,, |
| राज्यम् | ४६ |
| राज्यस्य परिभाषा | ,, |
| आधुनिकमतानि | ४७ |
| राज्ये वैदिकविमर्शः | ४८ |
| राज्योत्पत्तिः | ४९ |
| अराजकं वैराज्यं च | ५१ |

राज्यस्य मूर्तिमत्त्वम् ५६
चत्वारि मूलतत्त्वानि ५७
राज्यस्योद्देश्यम् ६०
राज्यस्य प्रकाराः „
राज्योपजीव्यं पुरम् ( अर्वाचीन-दिशा ) ६१
त्रिपुरम् ( वैदिकदिशा ) ६२
ब्रह्माण्डान्तर्गतत्रैलोक्यम् ६३
ध्वजः ६५
तृतीयोऽध्यायः–राज्यविभागाः ६७–८८
वेददिशा ६७
राज्याधिकारिणः „
रत्निनः ७१
राज्याधिकारसूचकचिह्नधारिणः ७२
पुरोहितः ८१
ब्रह्मणस्पतिः ८२
पुरोहितमहत्त्वम् „
अग्निः पुरोहितः ८४
गुप्तचरः ८६
चावाचकाः शब्दाः „
प्रहितः ८७
पशुपक्ष्यादीनां गुप्तचरत्वम् ८८
चतुर्थोऽध्यायः–सभा-समित्यादयः ८९–१०३
सङ्घटनसंस्थाया विकासः ९०
विविधा सङ्घटनसंस्थाः „
सभा „
संसद् ९२
नरिष्टा „
समितिः ९५
सभ्याः ९६
सभेयः „
सभाचरः ९७
सभासाहः „
आमन्त्रणम् „
विदथम् ९८
स्त्रीसभम् १००
चरणम् „
परिषद् १०१
हविर्धानम् „
विशः „
गणसभा „
ग्रामसभा १०२
ग्रहनक्षत्रणां सम्मेलनम् „
अमावस्या „
पूर्णिमा „
अनुमतिः १०३
भारती „
सरस्वती „
इडा „
व्रात्यः „
निष्कर्षः „
पञ्चमोऽध्यायः–न्यायोनीतिश्च १०४–११९
न्यायः १०४
व्यवहारः १०५
न्यायाधिकारी „
प्राशप्रतिप्राशौ १०६
वेदे नीतिभेदानां चर्चा– १०७
नारदः „
सामादयः १०८
दुष्टवाचकानि १०९
दण्डविधानवाचकानि „
वधदण्डप्रयोगाः ११०
पापिनः अधोगतिः „
आत्मदण्डः „
वेदे व्यावहारिकनीतयः १११
वेदेषु करचर्चा „
विविधाः कराः ११२
करस्य परिमाणम् ११७
करस्योपयोगः ११८

षष्ठोऽध्यायः—पुरं तत्सम्बद्धा विषयाश्च १२०–१२५
नगरम् १२१
जनपदः १२२
सभेदानि पुराणि ,,
प्रस्तरपुरम् ,,
प्रस्तरवदेव ,,
त्रिधातुभिर्निर्मितम् १२३
शतलौहपुरम् ,,
शारदीपुरम् ,,
गोमतीपुरम् ,,
कण्टकावृता दुर्गाः १२४
महापुरम् ,,
सचलं पुरम् ,,
सप्तमोऽध्यायः—वैदिकसमाजः १२६–१४१
सृष्टिमूलानि १२६
यज्ञाः १२८
समाजसंघटकः १३०
मिथुनम् ,,
विवाहः १३१
मानवपरिवारः १३२
वनसम्पत्तिर्व्यवसायश्च १३४
शिक्षा १३७
उपसंहारः १३८
ग्रन्थसूची १४२–१४८

●

# शुद्धि-पत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | ४ | शाखा | शाखाः |
| ३ | ६ | एकिंवशतिदोभे | एकविंशतिभेदो |
| ३ | ७ | चरणव्यूह्यो | चरणव्यूहयो |
| ४ | २ | आङ्गिरसः | आङ्गिरसः |
| ६ | २७ | मथर्वाङ्गिरस | मथर्वाङ्गिरस |
| ६ | २९ | प्रतिकर्तार | प्रतिकर्तारं |
| १० | ३ | सृष्टेःमूंल | सृष्टेर्मूल |
| १० | १२ | आमेकाचार्याणामेका | आचार्याणामेका |
| १७ | ११ | तोर्थेंयु | तीर्थेषु |
| २३ | १३ | थर्वंणानां | थर्वणानां |
| २७ | १५ | दृष्टवा | दृष्ट्वा |
| २७ | २८ | मैत्रावरुणा | मैत्रावरुणौ |
| २८ | ११ | मूलका | मूलिका |
| ३३ | २३ | शाशिते | शासिते |
| ३३ | ३३ | १. ४१४ ? | १।४।१४ |
| ३४ | १ | मुपयुक्तै | मुपर्युक्तै |
| ३५ | २७ | समाजिको | सामाजिको |
| ३६ | १ | विराट | विराट् |
| ४० | ९ | वैश्वनरस्य | वैश्वानरस्य |
| ४४ | ३४ | ऐ. ब्रा. प्रं. १ ख. १३ । | |
| ४५ | ६ | जराय्ववरिस | जराय्वसि |
| ४७ | ३ | संख्यका | संख्यक |
| ४८ | २४ | वैशिष्ट | वैशिष्टचं |
| ५६ | २ | विचारौ | विचारो |
| ५६ | ३३ | चत्वरि | चत्वारि |
| ५९ | २५ | आधुनिकामेव | आधुनिकानामेव |
| ६० | ७ | न्याया | न्यायो |
| ६४ | ७ | प्रसङ्गेऽतस्मिन् | प्रसङ्गेऽस्मिन |
| ६४ | २८ | जीवयितं | जीवयितु |
| ७२ | १३ | चिनह | चिह्न |
| ७६ | १९ | मणना | मणिना |
| ८४ | २३ | पुतस्तात् | पुरस्तात् |
| ९१ | ३० | एवको | एव कोपि |

# अथर्ववेदे राजनीतिः

## प्रथमोऽध्यायः

### विषयप्रवेशः—

सामान्यतया राजनीतिशास्त्रनामके विषये राज्यशासनयोश्च विचारो भवति। परं तत्र अस्य शास्त्रस्याऽऽरम्भात्पूर्वं मनसि एको विचारः समायाति, यो न केवलं वैयक्तिकः प्रश्नोऽपितु प्रचलितवैज्ञानिकशोधपद्धतौ सर्वमान्यो विचारणीयश्च। अधुना सर्वादौ चिन्तनीयमिदमस्ति यद् राजनीतेः प्रारम्भः कदा, कुत्र, कथम्, केन वा कृतः। यद्यपि सर्वसाधारणं मतं वर्तते यद् यत्किञ्चिदपि भूतं भविष्यच्च वर्तते, तत्सर्वं वेदेऽन्तर्गतमेव। नास्ति तद्व्यतिरिक्तं किमपि। परमनेन केवलं भारतीयपरम्परासु दीक्षितानां सुकृतिनां कवीनामेव भवति सान्त्वनम्। प्रत्यक्षदर्शकानां स्थूलग्राहकाणामाधुनिकानां कृते त्वस्य सूत्रात्मककथनस्य व्याख्यानपूर्वकविवेचनस्यापेक्षा वर्तते। अर्थात् तत्र भवति अद्यतनपद्धत्यनुसारं शोधस्याऽऽवश्यकता। तत्र केचन विश्वसन्ति यद् यथाऽऽधुनिके जगति यादृशं प्रतिक्षणनिर्मितं नूतनं नूतनं यत्किञ्चिदपि वस्तुजातं वैदेशिकैः (क्वचित् स्वदेशस्थैरपि) विद्वद्भिः प्रदर्शितं वर्तते, तथैव राजनीतिशास्त्रमपि वर्तते। परं सश्रद्धं स्वतन्त्रबुद्ध्या च विचारे कृते सति अवगम्यते यदिदं वेदमूलकं शास्त्रमस्ति। तर्हि तद्वेदमूलकत्वमवगन्तुं किञ्चित्प्रयत्नः क्रियते।

### अष्टादशविद्यानिरूपणम्—

अस्माकं भारतीयशिक्षापद्धतौ चतुर्दशविद्यानां पठन-पाठनक्रमो वर्तते। तद्यथा वरतन्तुशिष्यः कौत्सः चतुर्दशविद्यानां साङ्गतार्थं रघोः समीपं गत्वा गुरुणोपदिष्टः सन् कथयति 'कोटीश्चतस्रो दश चाहरेति'[1] गुरोरादेशः। शिवपुराणादिषु आसां सविवरणं प्रमाणं लभ्यते[2] एव। तत्र भगवतो कृष्णद्वैपायनस्य मूलभूतवेदराशेः पृथग् विभाजनकार्येणेदं ध्वन्यते यद् यादृशमद्य जनानां मतिमान्द्यमवलोक्य मान्या विद्यावतारा विचारकाः प्रमुखविषयादेव (शाखारूपेण

---

१. रघु० ५।२१।

२. अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश॥
(शि० पु०, वा० सं० पू० १.२५-२६)

प्रतिष्ठितानाम् ) उत्पाद्यमानानामुपविषयाणां सृष्टिं कुर्वन्ति। तस्य मौलिकरूपेण विस्तृतं विवेचनं विधाय तेषां प्रतिष्ठां कुर्वन्ति। तादृशमेव व्यासादयः सम्भूय-विद्यमानानां विभिन्नानामासां चतुर्दशविद्यानां परमावश्यकतां लोकोपयोगितां चावलोक्य, तत्र विशिष्टमन्त्रेषणं विधाय सर्वादौ चतसृणां विद्यानां पृथक् प्रतिष्ठामकुर्वन्। ता ऋगादयश्चतस्रः। अत्र प्रकृतराजनीतिविषयमवलम्ब्य विचारः करणीयः। अत ऋगादीनामुपवेदानां विचारः क्रियते। तत्र यथा–ऋग्वेद-स्यायुर्वेदः, यजुर्वेदस्य धनुर्वेदः, सामवेदस्य गान्धर्ववेदः, अथर्ववेदस्यार्थशास्त्रम् स्थापत्यशास्त्रम् आयुर्वेदशास्त्रं वा। अत्राऽऽद्यानां तिसृणामुपविद्यानां विषये वर्तते सर्वं सुस्पष्टं विवरणम्, परं तुर्यस्य वेदस्य तस्योपवेदस्य च विषये वर्तते स्पष्टीकरणस्याऽऽवश्यकता। प्रतिपाद्यविषयेण सहास्य वेदस्यैव सम्बन्धो वर्तते कोऽपि विशिष्टः। वेदममुं शिरोमणिरूपेण स्वीकुर्वन्ति केचन विचारकाः। अतस्तस्य नामशाखादिप्रतिपादिता विषयाश्चिन्तनीयाः।

## अथर्ववेदस्य वाङ्मयम्—

अस्य वेदस्यापराभिधानानि श्रूयन्ते। यथा–अथर्वाङ्गिरसवेदः, अथर्ववेदः, अङ्गिरोवेदः, ब्रह्मवेदः, भृग्वङ्गिरोवेदश्च। विषयोऽयमथर्वण उत्पत्तिवर्णने विस्तरेण वक्ष्यमाणः। तत्राऽपि विद्यमानानामथर्ववेदसम्बद्धानां ग्रन्थानां किम्बहुना नामतोऽपि परिचयः क्रियते।

वेदस्यास्य वाङ्मयनिदर्शकानि स्थलानि विशेषेण सीतोपनिषन्मुक्तिकोप-निषन्महाभाष्यचरणव्यूहेषु प्रदर्शितानि लभ्यन्ते। यथा ( आथर्वणीया ) सीतो-पनिषदि—

………………पञ्चशाखा अथर्वणः।
वैखानसमतस्तस्मिन्नादौ प्रत्यक्षदर्शनम्॥
स्मर्यते मुनिभिर्नित्यं वैखानसमतःपरम्।
कल्पो व्याकरणं शिक्षा निरुक्तं ज्यौतिषं छन्द एतानि षडङ्गानि।
उपाङ्गमयनं चैव मीमांसान्यायविस्तरः।
धर्मज्ञसेवितार्थं च वेदवेदोऽधिकं तथा॥
निबन्धाः सर्वशाखा च समयाचारसंगतिः।
धर्मशास्त्रं महर्षीणामन्तःकरणसम्भृतम्॥
इतिहासपुराणाख्यमुपाङ्गं च प्रकीर्तितम्।
वास्तुवेदो धनुर्वेदो गान्धर्वश्च तथा मुने॥
आयुर्वेदश्च पञ्चैते उपवेदाः प्रकीर्तिताः[1]॥
दण्डो नीतिश्च वार्ता च विद्या वायुजयःपरः।
एकविंशतिभेदोऽयं स्वप्रकाशः प्रकीर्तितः॥

१. ( आथर्वणीया ) सीतोपनिषद्–५।

## अथर्वणश्शाखाभेदाः—

तत्रोपलब्धस्याथर्ववेदस्य मतान्तरेण पृथक्-पृथक् शाखाभेदा दृश्यन्ते। यथा मुक्तिकोपनिषदि—

'अथर्वणस्य शाखा स्युः पञ्चाशद्भेदतो हरेः'[1]।

इत्यनेन वेदस्यास्य पञ्चाशच्छाखाभेदाः प्रोक्ताः। उपर्युक्तसीतोपनिषदनुसारेणाथर्ववेदस्य पञ्चशाखास्तथैव तत्रैव—'एकविंशतिदोभेऽयं स्वप्रकाशः प्रकीर्तितः' इत्यनुसारेणैकविंशतिभेदानां निर्देशस्तथापि महाभाष्यचरणव्यूह्योर्मतमेव विशेषेण प्रसिद्धिं गतम्। यथा 'नवधाथर्वणो वेदः' ताः इमाः पैप्पलादास्तौदा मोदाः शौनकीया जाजलीया जलदा ब्रह्मवदा देवदर्शाश्चारणवैद्याश्चेति।

(१) संहिता–तत्रोपयुक्तासु नवशाखासु शाखाद्वयमेवोपलभ्यते। पैप्पलादी शौनकीया संहिता चेति।

(२) ब्राह्मणम्–ब्राह्मणं तु एकमेव लभ्यते। यथा—गोपथम्।

(३) उपनिषद्–अथर्ववेदस्यारण्यकग्रन्थो नैव लभ्यते। पैप्पलादशाखायाः प्रश्नोपनिषत् तथा च शौनकीयाया मुण्डकोपनिषद्माण्डूक्योपनिषच्च लभ्यते। तत्र [2]मुक्तिकोपनिषद्वचनानुसारेणाथर्ववेदस्योपनिषदो 'भद्रं कर्णेभिः शृणुयाम.....' इति शान्तिः। एवं स्वीकारेणाथर्ववेदीयोपनिषदां नैकविधा संख्या भविष्यति। यद्यपि क्वचिदस्य विरोधोऽपि जायते। यथा—'अमृतनादोपनिषदथर्ववेदीयोच्यते, परं तत्र शान्तिः 'सह नाववतु' वर्तते। मुक्तिकोपनिषदि उपनिषदां सङ्ख्या एकत्रिंशदुल्लिखिता वर्तते। तथैवाधुना आनन्दाश्रमसंस्कृतग्रन्थमालाया 'उपनिषदां समुच्चयान्तर्गतानामेकत्रिंशदुपनिषदोऽथर्ववेदस्य प्रकाशिताः लभ्यन्ते। प्रायोऽथर्ववेदस्य सौभाग्यकाण्डवर्तिनीनामुपनिषदामुल्लेखो लभ्यते। परमथर्ववेदीयसौभाग्यकाण्डस्य प्रत्यक्षपरिचयो नैव व्यज्यते।

## अथर्ववेदस्याङ्गाद्युपग्रन्थाः—

(क) शिक्षा ( माण्डूकी ) अत्र वृत्तिप्रकरणादिविषयाः सन्ति।

(ख) सूत्रग्रन्थाः–अतोऽग्रे वेदाङ्गानां ग्रन्थानां विचारः क्रियते। येऽथर्ववेदविषयज्ञानार्थमुपयुज्यन्ते। संहिताब्राह्मणयोरनुसारेणैव सप्रयोगश्रौतस्मार्तधर्मकर्मणां निर्देशकाः सूत्रग्रन्था भवन्ति। तत्र शाखाध्ययनविचारे संहिताब्राह्मणसूत्राणामेकत्वस्य विचारो वर्तते। परमधुना ऋगादिष्वपि स नियमो नान्वर्थयति। सायणाचार्यानुसारेण— 'शौनकीयादिषु चतसृषु शाखासु अनुवाकसूक्तऋगादीनां' गोपथब्राह्मणानुसारेण पञ्चभिः सूत्रैर्विनियोगोऽभिहितः। तानि च सूत्राणि— कौशिकम्, वैतानम्, नक्षत्रकल्पः, आङ्गिरसकल्पः शान्तिकल्पश्चेति। तदुक्तमुपवर्षाचार्यैः कल्पसूत्राधिकरणे—

---

१. मुक्तिकोपनिषद्–१।१३; २. मुक्ति० १ ( ४९ )–५।

नक्षत्रकल्पो वैतानस्तृतीयः संहिताविधिः ।
तुर्य आङ्गिरसः कल्पः शान्तिकल्पस्तु पञ्चमः ।। इति ।

तत्र साकल्येन संहितामन्त्राणां शान्तिकपौष्टिकादिषु कर्मसु विनियोग-विधानात् 'संहिताविधिर्नाम कौशिकं सूत्रम्[1] ।' अनेन सिद्धयति यत् कौशिकसूत्र-स्यापरं वेदमूलकं नामापि संहिताविधिरिति । इदं गृह्यसूत्रं वक्तुं शक्यते । एवमेव वैतानश्रौतसूत्रमवगन्तव्यम् । एतेषां पञ्चकल्पानामुल्लेखः अथर्ववेदस्य प्राचीनहस्तलिखितपुस्तकेषु वर्तते । तस्मादत्र वैतानश्रौतसूत्रं कौशिकं गृह्य-सूत्रं च निर्दिष्टम् । तत्र सभाष्यं कौशिकगृह्यसूत्रं पाण्डुलिपिरूपेण जर्मनदेशे संरक्षितं वर्तते, यत् चतुर्दशाध्यायात्मकमस्ति, यस्मात् षडध्यायमात्रं १९७२ ई० वत्सरे तिलकमहाराष्ट्रविद्यापीठप्रकाशितं लभ्यते ।

( ग ) ज्यौतिषम्– तत्र शङ्कुप्रमाणतच्छायातो मुहूर्तमानादिकमस्ति ।

( घ ) छन्दः– अत्राक्षरप्रमाणद्वारा पादनिर्णयस्तद्द्वारा छन्दोनिर्णयः ।

( ङ ) निघण्टुः – वैदिकपारिभाषिकशब्दानां संकलनम् ।

( च ) चतुरध्यायी– कौशिकव्याकरणसूत्राणि । पाण्डुलिपिः संरक्षिता वर्तते । क्वचिच्छौनकी अथवा शौनकीया चतुरध्यायिकाग्रन्थः अथर्ववेदस्य प्राति-शाख्यत्वेनोल्लिखितो लभ्यते[2] ।

( छ ) अथर्वप्रातिशाख्यम्– अत्र स्वरसन्धिविकृतिनियमसूत्राणि च सन्ति ।

( ज ) पञ्चपटलिका– संहितास्थर्चां सूक्तानुसारं संख्यादिविचारः ।

( झ ) दन्त्योष्ठ्यविधिः– संहितास्थ-ब-वकारादीनां स्वरूपकथनम् ।

( ञ ) बृहत्सर्वानुक्रमणिका– ( भृग्वङ्गिरोक्ता ) अत्र संहितास्थमन्त्राणां देवतर्षिच्छन्दसां कथनम् ।

( ट ) विनियोगमाला– सम्भवतः केशवप्रणीता ।

( ठ ) कौशिकसूत्रपद्धतिः– केशवकृतेयं पद्धतिरधुना प्रकाशनाधीना वर्तते । पुरा चतुर्दशाध्यायात्मकस्य कौशिकसूत्रस्य दारिलादिभिः भाष्यं लिखित-मासीत्, यस्य सारात्मको ग्रन्थः केशवपद्धतिरवबुध्यते । तत्र ग्रन्थकारेण केशवेन चतुर्दशाध्यायान्ते उपसंहारे स्ववंशादिपरिचयोऽपि प्रदर्शितः । तस्मात् प्रमुखाः पङ्क्तयः प्रदर्श्यन्ते यथावत्—

कौशिको वसुशर्मा च तस्य पौत्रोऽथ दारिलः ।
शास्त्रविज्ञानमेषां हि चतुर्थो नोपलभ्यते ॥
तदयुक्तं हि यद्वक्तुं बोद्धारः सन्त्यनेकशः ।
तथायदं येषामन्वये कौशिकज्ञातवान् ॥

१. सायणकृदथर्वभाष्यभूमिका, पृ० २३, अत्रैव पञ्चकल्पानां पृथक् पृथक् सूची लभ्यते ।
२. अथर्ववेद एवं गोपथब्राह्मण–पृ० २७९ ।

वाहसात्केशवोत्पन्नः केशवानन्द उच्यते।
अनन्तात्सोमेश्वरो जातः सोमेश्वरात् केशवस्तथा ॥
सर्वे तेऽथर्ववेदिनः सर्वेऽग्निहोत्रिणः।
त्रयाणामपि भाष्याणां सारं जग्राह केशवः।
तेन शिष्यहितार्थाय कृता केशवपद्धतिः॥
श्रीमद्भोजपुरे विद्वानासीत्सोमेश्वरो द्विजः।
तत्पुत्रकेशवेनैषा कृता कौशिकपद्धतिः[1] ॥

(ड) उपवेदाः—अस्य वेदस्योपवेदग्रन्थाः-अर्थशास्त्रम्, शिल्पादिशास्त्रम्, तन्त्रशास्त्रम्, स्थापत्यशास्त्रम्, शस्त्रशास्त्राणि, कामशास्त्रम्, सर्पवेदः, पिशाचवेदः, असुरवेदः, इतिहासवेदः, पुराणवेदः, भैषज्यवेदः, भास्कर्यवेदश्चेति ग्रन्थान्तरेषु श्रूयन्ते।

(ढ) संगीतकलादयः—अथर्ववेदसम्बद्धानां नीतिसंगीतकलादीनामपि वर्णनं मधुसूदनसरस्वतीप्रणीते 'प्रस्थानभेदे' वैपुल्येन वर्तते[2]।

## अथर्ववेदे राजनीतिसम्बद्धा चर्चा—

स्थूलदृशेत्थमुपर्युक्तमाथवर्णग्रन्थसूचीमवलोक्येदमवगम्यते यद् उपर्युक्तायां सूच्यां राजनीतिसम्बद्धस्य ग्रन्थस्य स्पष्टतोऽलभ्यमानत्वादाधुनिकानां सामान्यविचारेण आक्षेपापत्तिः सम्भवा; परं सच्छ्रद्धया धैर्येण स्वतन्त्रबुद्ध्या चिन्तिते तस्याः स्फुटरूपेण निरसनं भवति। यतो हि तत्र प्रतिग्रन्थं स्थलेषु स्थलेषु प्रसङ्गतः क्वचित् समासेन क्वचिद् विस्तरेण च विविधा विषया विवेचिताः सन्ति। तेषु न केवलं पारमार्थिका एव; अपितु सामाजिकलौकिकराजनीतिसम्बद्धा विषया येषु मुख्यतः स्वर्गाध्यात्मविषयकास्तत्प्रापकप्रयोगाश्च अल्पीयांसः सन्ति। प्रमुखतो गृहस्थकृत्याशासकभूपालतत्सम्बद्धाः पारिभाषिकाः शब्दा विवेचिताः सन्ति। तथैव पूर्वानुकरणस्यैतिहासिकस्थलानां च निर्देशोऽपि लभ्यते। अत्र केवलमथर्वसंहितायां क्वचिन्नाममात्रम्। पूर्वानुकरणार्थमुपदेशः-अथर्व० १/२९,१,७/७९,१०/६/१५।

मातृभूमेः राष्ट्रभक्तिप्रेरकं भूमेर्महत्त्वसूचकं च—१२/१।
राजनीतेरुपजीवको 'विराट्'—८/१०।
राष्ट्रिया शक्तिः—४/३०।
सभा—५/२६, ६/२८/३, ६/६४/२, ७/१२।
स्त्रीसभम्—७/४६, ७/४७/२, ९/३/७, ११/१/१३।
सभाभवनम्—९/३/६-८।

---

१. अयं ग्रन्थोऽप्रकाशितरूपेण मम पार्श्वे वर्तते।

२. च० व्यू०। पा० भा०। वे० मू० रामचन्द्रशास्त्रिरटाटेस्मृतिग्रन्थे श्रीमदनन्तशास्त्रिफडकेशेषराजशर्मणोः लेखौ; अथर्ववेद एवं गोपथब्राह्मण, पृ० १३-२४; वैदिकसाहित्यम्—पृ० २९०।

राज्ञः कर्त्तव्यम्—७/८४-८६,९१-९३ ।
राजकर्तारः—३/५ ।
राज्याङ्गानि—६/७२/३, ६/१०१/१ ।
राज्ञो निर्वाचनम्—३/४, ६/१२८ ।
राज्ञः स्थिरता—६/८७,८८ ।
राष्ट्रस्यैश्वर्यवृद्ध्यर्थम्—६/५४ ।
राज्याभिषेकः—४/८ ।
स्वराज्ये राज्ञः पुनःस्थापना—३/३ ।

दुष्टनाशनदमननिवारकाश्च–१/७,८,१६,२८, ४/३,४०, ५/८, ६/६५–६७, ७५, ९७, १०३, १०४, १३४, १३५, ७/१३, ७०, ९०, १०८, ८/३, ४ ।

सेनासम्मोहनम्–३/१,२, नीतिपरकाणां स्थलानां निर्देशः–१/६/४, ६/७२/२, ६/१३४/३, ७/२५/२, सामादयः–१/२८/३, २/५/३, ५/८/५, १०/१/१५ ( सम्पूर्णं सूक्तम् ), २०/६८/४; करग्रहणम्–३/२९/१, ११/१/६; नीतिनिपुणानां समादरः–६/७७/२; शासनव्यवस्था च–३/४/२, ४/२२/१ ।

एतेषां राजनीतिसूचकानां स्थलानामवलोकनेनेत्थं विश्वासो भवति यत् प्राचीने वैदिके साहित्येऽपि विस्तरेण राजनीतिः प्रयुक्ताऽऽसीत् । तथैवायमपि विश्वासो भवति यत् प्रागैतिहासिके काले यावद् वैदिकं साहित्यं प्रसारितमासीत्, तस्मादत्यल्पमेव साहित्यमधुना वर्तते भुवि । इतिहासोऽपि साक्षिरूपेण स्मारयति यद् भारतेऽस्मिन् देशे नैकविधानि परकीयाक्रमणानि संजातानि । तस्मिन्नेवावसरेऽधिकाधिको विनाशः संजातः । तथाप्युपलब्धेन साहित्येन प्रचलितां विविधां वैदिकीं परम्परां चाभिवीक्ष्य वयमेतद् वक्तुं शक्नुमो यद् वेदेषु राजनीतेर्व्यवस्थितो विचारो वर्तते ।

तत्र पूर्वाचार्यैः स्मृतिकारै राजनीतिचिन्तकैश्च वेदस्यास्य महत्त्वं ज्ञात्वैव राज्यशासनप्रजानां कुशलमभिवर्धनपालनाद्यर्थं च स्वविचाराः प्रकाशिताः । यथा—

पुरोहितं प्रकुर्वीत दैवज्ञमुदितोदितम् ।
दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा[1] ।।

तथा चाह कौटिल्यः–'पुरोहितमुदितोदितकुलशीलं षडङ्गे वेदे दैवे निमित्ते दण्डनीत्यां चाभिविनीतमापदां दैवमानुषोणाम् अथर्वभिरुपायैश्च प्रतिकर्तारं कुर्वीत[2] । अपि च—

त्रय्यां च दण्डनीत्यां च कुशलोऽस्य पुरोहितः ।
अथर्वविहितं कर्म कुर्याच्छान्तिकपौष्टिकम्[3] ।।

१. याज्ञ० स्मृ० १।३१२–१३; २. अर्थशा० अ० १ प्र० ४ अ० ८ ।
३. का० नी० सा० ४।३२ ।

अथर्वपरिशिष्टेऽपि--

यस्य राज्ञो जनपदे अथर्वा शान्तिपारगः।
निवसत्यपि तद् राष्ट्रं वर्धते निरुपद्रवम्॥
तस्माद् राजा विशेषेण अथर्वाणं जितेन्द्रियम्।
दानसम्मानसत्कारैर्नित्यं समभिपूजयेत्[1]॥

इदमुचितमेव यद् राजनीतिज्ञैः आथर्वणवित्पुरोहितः प्रशंसितः। तथैवानेनाथर्ववेदस्य तत्सम्बद्धसाहित्यस्यानुयायिनां ग्रन्थानां तत्र स्थितानां विषयपरिपोषणानां सङ्केतानां च समासेन विचारो जातः।

अतोऽग्रे अथर्ववेदप्रवर्तकस्य विषये समासेन विचार्यते--

## अथर्वशब्दव्युत्पत्तिः—

अथर्वन्[2]—पु० ( अथ + ऋ + वनिप् ) अथशब्दः मङ्गलानन्तरादिवाचकस्तथैव 'ऋ' धातुः गत्यर्थकः। अनेनास्य सामान्यतः पाणिनीयव्याकरणगतार्थः माङ्गलिकेन गच्छति। कोशादिषु[3]प्रायोऽस्यार्थः--अग्निहोत्री, पुरोहितः ऋषित्रिशेषः सामाजिकराजनीत्यादिषु कुशलः, अभिचारेण सह शान्तिपुष्टिभिषङ्माङ्गलिककर्मविशेषस्य च ज्ञाता ब्रह्मणो ज्येष्ठपुत्रः ऋगादिषु चतुर्थवेदस्य द्रष्टा प्रचारकश्चाङ्गिरोवंशीत्यादिना प्रसिद्धः।

अस्य शब्दस्य नूतनैका व्युत्पत्तिरपि लभ्यते। यथा--'अ + थर्वन्'[4], थर्वधातुः कुटिलचञ्चलहिंसाद्यर्थकः। इत्यनेनाथर्वणोऽर्थः अकुटिलः, अचञ्चलः, अहिंसकश्च। वस्तुतो व्युत्पत्तिरियं कष्टसाध्या। यतो धातुपाठे 'थुर्व' हिंसार्थकः न तु थर्वेति। तत्र 'उकार' लोपान्तेऽर्थोऽयं सम्भवः।

अस्याथर्वणः भृग्वङ्गिरःप्रभृतिभिः सह समीपतरः सम्बन्धोऽस्ति, तत्राप्यङ्गिरसा सह विशेषतरः। क्वचित् क्वचिदिमावन्योन्यं सम्मिश्रितौ प्रतीयेते, क्वचिच्च स्वतन्त्ररूपेण। तथैवास्य जन्मादिकमपि चिन्त्यम्। अनेनाथर्वणः सुस्पष्टो बोधः कष्टसाध्यः। अतोऽत्र व्यक्तित्वेन चतुर्थवेदस्य प्रवर्तकत्वेन दर्शकत्वेन वा प्रसिद्धानां पृथक् पृथक्सम्प्राप्तानामथर्वाऽथर्वाङ्गिरसाङ्गिरःप्रभृतीनां पारिवारिकं सामाजिकनैतिकादिविषयकः संक्षिप्तपरिचयः प्राप्तव्यः।

## अथर्वणो जन्मादिविषयचर्चा—

तत्रादावथर्वा विविच्यते पौराणिकमतेन।

( क ) पुराणानुसारेण--उपरि कोशादिप्रमाणेनायं ब्रह्मणः पुत्र इत्युक्तः, परं यत्र श्रीमद्भागवतादिषु ब्रह्मणः मानससृष्टौ तत्र मरीच्यादीनामाद्यानां मानस-

१. अप० ४।६।१, द्र० सायण-अथर्ववेदभाष्ये उपोद्घाते, पृ० ७।
२. संस्कृतहिन्दीकोश पृ० २१, प्राचीन चरित्रकोश पृ० १७।
३. माङ्गलिक-आर्य; ४. अथर्ववेद-ब्रह्मविद्याप्रकरणम्, पृ० ७१।

पुत्राणामुत्पत्तिस्थानादिपूर्वकं वर्णनं लभ्यते। तत्र सूच्यामथर्वणः सङ्केतो नास्ति; यथा—

मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः।
भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः॥
उत्सङ्गान्नारदो जज्ञे ........................[1]।

परं तत्रैव पुराणेषु ब्रह्मणो मानसपुत्राणां विवाहवंशविस्तारादिप्रकरणेऽथर्वणो वर्णनं व्यज्यते। यथा—

अथर्वणेऽददाच्छान्तिं यया यज्ञो वितन्यते[2]।

अत्र यज्ञविस्तारकोऽथर्वा शान्तायाः पतिरुक्तः। तथैव—चित्तिस्त्वथर्वणः पत्नी लेभे पुत्रं धृतव्रतम्। दध्यञ्चमश्वशिरसम्......[3]।

अत्र (द्वितीयायाः भार्यायाः) चित्तेः पतिरूपेण दध्यङ्ङादीनां पितृरूपेण चाथर्वा प्रदर्शितः।

ब्रह्माण्डेऽस्य[4] सुरूपा मारीची, स्वराट् कार्दमी, पथ्या मानवीति तिस्रः पत्न्य उल्लिखिताः।

युधिष्ठिरस्य यज्ञे समागतेषु ऋत्विक्षु अथर्वाप्यासीत्[5]। तत्राङ्गिरस उल्लेखो नास्ति। एवं च यद्यपि पुराणेष्वथर्वणो विवाहपरिवारादिश्च संक्षेपेण निरूपितस्तथापि मरीच्यादिवद् ब्रह्मणो मानसपुत्रत्वेन स्पष्टतोऽनुक्तत्वात् समाधानं न भवति सन्तोषजनकम्। अतोऽस्य शोधो वेदेषु क्रियते।

(ख) उपनिषदनुसारेण—तत्र मुण्डकेऽस्य पितुः सङ्केतो लभ्यते स्पष्टतः। यथा—

ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वणे ज्येष्ठपुत्राय प्राह॥
अथर्वणे यां प्रवदेत ब्रह्माथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम्।
स भारद्वाजाय सत्यवहाय प्राह भारद्वाजोऽङ्गिरसे परावराम्[6]॥

इत्यनेन स्पष्टतो ध्वन्यते यदथर्वा ब्रह्मणो मरीच्यादिषु श्रेष्ठः, ज्येष्ठः, विशिष्टश्चासीत्। अथर्वा ब्रह्मणो लब्धविद्यां अङ्गिनामकं व्यक्तिविशेषमपाठयत्। अङ्गिः भरद्वाजगोत्रोत्पन्नाय सत्यवहायावोचत्। सत्यवहः अङ्गिरसमपाठयत्। महाशालोऽङ्गिराः शौनकमपाठयत्, अनया पठन-पाठनपरम्परया व्यज्यते यदथर्वाऽङ्गिरसः भिन्नस्तथैवाङ्गिसंज्ञकोऽप्येकः ऋषिविशेष आसीत्।

महाभारते उद्योगपर्वणि [7]अङ्गिरसगोत्रोत्पन्नोऽथर्वा चतुर्थवेदेन सम्बद्धः सङ्केतितः।

---

१. श्रीमद्भा० ३।१२।२२–२४; २. तत्रैव ३।२४।२४।
३. तत्रैव ४।१।४२; ४. ब्रह्माण्डपु० ३।१।१०२–१०३, अपि च वायुपु० ६५/९५।
५ श्रीमद्भा० १०।७४।९; ६. मु० उ० १।१।१–२।
७ महाभा० उद्यो० १८।७–८।

(ग) वेदानुसारेणाथर्वणो व्यक्तित्वम्—अथर्ववेदेऽप्यथर्वणः ज्येष्ठस्य सङ्केतकः स्थानद्वये एक एव मन्त्रो लभ्यते। यथा—

ब्रह्मज्येष्ठा सम्भृता वीर्याणि ब्रह्माग्रे ज्येष्ठं दिवमाततान।
भूतानां ब्रह्मा प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः[1]॥

यद्यप्यत्र 'ब्रह्मज्येष्ठा' इत्यस्यार्थः ब्रह्मदेव इत्येव सङ्केतितः सायणेनाथर्वभाष्ये तथापि मुण्डकोपनिषदः 'अथर्वाय ज्येष्ठपुत्राय' इत्यनेन तथा चाथर्ववेदस्यैकोनविंशतितमकाण्डस्य त्रयोविंशतितमसूक्तस्यारम्भे 'आथर्वणानां चतुर्ऋचेभ्यः स्वाहा' तथा चान्ते 'ब्रह्मज्येष्ठा सम्भृता ......' इति मन्त्रेणानुमीयते यदत्रस्थज्येष्ठत्वमथर्वाणं सङ्केतयति।

तद्यथा 'सत्यमहं काव्येन जातेन जातवेदाः अस्मि'[2] अर्थाद् यद्यपि पुराणादिष्वस्यायोनिजस्यापि विवाहपरिवारपुत्रशिष्यमित्रसामाजिकराजनीतिकव्यवहारेण विधिवत् सम्बन्धः प्रदर्शितः तथाप्यस्य तात्पर्यमिदमेव वर्तते यदयं काव्येन मन्त्रद्रष्टृत्वेन प्रेरकत्वेन शब्दप्रमाणेन वेदादिवाक्येन च प्रचारितत्वाज्जातवेदाः सर्वचराचरविदस्तीत्यर्थः। अत एव स्वतन्त्रो ब्रह्मणो ज्येष्ठपुत्रः।

सायणोऽपि गोपथब्राह्मणं पुरस्कृत्य प्रसङ्गतो भृग्वङ्गिरादिसहितस्याथर्वणः परम्परां विवेचयति। तद्यथा—अथर्वाख्येन ब्रह्मणा दृष्टत्वात् तन्नाम्ना अयं वेदो व्यपदिश्यते। तथाहि, पुरा खलु सृष्ट्यर्थं स्वयंभु ब्रह्म तपस्तेपे, तस्मात् तप्यमानात् सर्वेभ्यो रोमकूपेभ्यः स्वेदधारा अजायन्त। तासु स्वेदजातासु अप्सु स्वां छायां पश्यतो रेतश्चस्कन्द। तद्रेतः-सहिता आपो द्विरूपा अभवन्। तत्रैकतः स्थितं रेतो भृज्यमानं सद् भृगुर्नाम महर्षिरभवत्। स एव भृगुः स्वोत्पादकस्य तिरोहितस्य ब्रह्मणो दर्शनाय 'अथार्वाग् एनम् एतास्वेवाप्स्वन्विच्छ'[3] इति अशरीरया वाचोक्तत्वादथर्वाख्योऽप्यभवत्। अवशिष्टरेतोयुक्ताभिरद्भिरावृतस्य वरुणशब्दवाच्यस्य ब्रह्मणस्तप्तस्य सर्वेभ्योऽङ्गेभ्यो रसोऽक्षरत्। सोऽङ्गरसभूतत्वाद् अङ्गिरा नाम महर्षिरभवत्। ततस्तत्कारणं ब्रह्म तम् अथर्वाणम् अङ्गिरसं चाभ्यतपत्। ततः एकर्चद्वयृचादिमन्त्रद्रष्टारो विंशतिसंख्याका अथर्वाणोऽङ्गिरसश्चोत्पन्नाः। तेभ्यस्तप्तेभ्य ऋषिभ्यः सकाशात् स्वयंभु ब्रह्म यान् मन्त्रानद्राक्षीत्, सोऽथर्वाङ्गिरःशब्दवाच्यो वेदोऽभवत्। अत एकर्चादीनाम् ऋषीणां विंशतिसंख्याकत्वाद् वेदोऽपि विंशतिकाण्डात्मकः सम्पन्नः। अत एव सर्वसारत्वाद् अयं वेदः श्रेष्ठः। श्रूयते हि—'श्रेष्ठो हि वेदस्तपसोऽधिजातो ब्रह्मज्ञानां हृदये सम्बभूव[4]' इति। तथा—'एतद्वै भूयिष्ठं ब्रह्म यद् भृग्वङ्गिरसः। येऽङ्गिरसः स रसः। येऽथर्वाणस्तद् भेषजम्। यद् भेषजं तद् अमृतम्। यद् अमृतं तद् ब्रह्म'[5] इति। एवं सारभूत-

१. अथर्व० १९।२२।२१; १९।२३।३०। २. अथर्व० ५।११।३।
३. गो० ब्रा० १।१।४। ४. गो० ब्रा० १।१।९।
५. गो० ब्रा० १।३।४।

ब्रह्मात्मकत्वाद् ब्रह्मकर्तव्यप्रतिपादनाच्च अयं ब्रह्मवेद इत्यप्याख्यायते[१]। अनेन युगपद् अथर्वादीनां वेदत्वं तेषामुत्पत्तिश्च सुव्यक्ता। तथैव एतेषामुत्पत्तिवर्णनेन सृष्टेःमूलप्रक्रियाया भावोऽपि स्फुटो भवति। एतेषामन्योऽन्यसम्बन्धस्य गुणकर्मणोरिदं यथार्थं चित्रमवबुध्यते।

अथर्वणः कर्तृत्वम्—इत्थं मीमांसयाऽवबुध्यते यदथर्वा भृग्वङ्गिर-आदिभ्यो भिन्नः कोऽपि विशिष्ट आसीत्। अयं स्वकौशलेन योग्यत्वेन च क्वचित् क्वचित् सामाजिकादिकार्यसम्पादनार्थमेभिः सह सम्मिलितः। वक्ष्यमाणेषु भृग्वङ्गिर-आदिपरिचयेषु विषयोऽयं स्पष्टो भविष्यति।

अस्यैवाथर्वणो वैदिकः परिचयः पुरतः स्थाप्यते[२]। ऋग्वेदेऽस्य प्राचीनोपाध्यायत्वेन वर्णनं लभ्यते, यथा—

**एवा महान् बृहद्दिवो अथर्वावोचत्स्वां तन्वा मिन्द्रमेव।**

शतपथ आमेकाचार्याणामेका सुदीर्घं नामसूची लभ्यते। यत्राङ्गिरसदध्यङ्दधीचाथर्वणादीनामप्युल्लेखः। अत्राथर्वणः स्वतन्त्ररूपेण सङ्केतः[३]।

वैदिके साहित्ये सामाजिकराजनीतिकादिविषये निर्माणकार्ये यस्याग्नेः प्रमुखं स्थानमासीत्, तस्योत्पादक आहिताग्निरथर्वा एव। यथा—

**त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः[४]॥**

अथर्वण उत्पन्नोऽग्निर्विवस्वतो दूतोऽभूत्। यथा—

**अग्निर्जातो अथर्वणा विद विश्वानि काव्या।**
**भुवद्दूतो विवस्वतो वि वो मदे प्रियो यमस्य काम्यो विवक्षसे[५]॥**

अयं देवतास्वपि परिगणितः। यथा—

**आदित्या रुद्रा वसवो दिवि देवा अथर्वाणः।**
**अङ्गिरसो मनीषिणस्तेनो मुञ्चन्त्वंहसः[६]॥**

[७]स्तुत्योऽयमथर्वा यज्ञेन (सङ्गतिकरणेन) सुस्थिर आसीत्। यथा—

**ते हि प्रजाया अभरन्त विश्रवो बृहस्पतिर्वृषभः सोमजामयः।**
**यज्ञैरथर्वा प्रथमो वि धारयद्देवा दक्षैर्भृगवः सं चिकित्रिरे[८]॥**

अस्यैव यज्ञसामर्थ्येन मार्गे विस्तृते सति सूर्य उत्पन्नः। यथा—'

---

१. अथर्ववेदभाष्ये-पृ० ६। २. ऋ० १०।१२०।९ (सम्पूर्णं सूक्तं द्रष्टव्यम्)।
३. शतपथब्राह्मणान्तर्गतबृहदारण्यकोपनिषद्–१४।२।५।२२।
४. ऋ० ६।१६।१३, तै० ब्रा० ३।४।११।
५. ऋ० १०।२१।५, तत्रैव ८।९।७, १०।८७।१२, यजु० ३०।१५।
६. अथर्व० ११।६।१३. बृ० उ० २।६।३, ४।६।३।
७. ऋ० १।८०।१६। ८. तत्रैव–१०।९२।१०।

यज्ञैरथर्वा प्रथमः पथस्तते ततः सूर्यो व्रतपा वेन आजनि[1]।

बृहस्पतिना सख्यं जुषाणोऽथर्वा वरुणेन लब्धधेनुरासीत्। यथा—

कः पृश्निं धेनुं वरुणेन दत्तामथर्वणे सुदुघां नित्यवत्साम्।
बृहस्पतिना सख्यं जुषाणो यथावशं तन्वः कल्पयाति[2]॥

## अथर्वण आत्मपरिचयः—

अथर्ववेदे 'सम्पत्कर्म'[3]नाम्नि सूक्ते प्रश्नोत्तरपद्धत्या वरुणाथर्वणोः संवादो लभ्यते यत्राऽथर्वणो वास्तविकं स्वरूपं व्यज्यते।

अत्र सम्पूर्णसूक्तस्य व्यावहारिकं पक्षमवलोक्य विज्ञायते यदिदं सूक्तं सामाजिकं नैतिकं च पक्षं द्रढयति। अस्य सायणभाष्यं नैव लभ्यते। तत्र सूक्तस्य प्रथमे मन्त्रे चत्वारि वाक्यानि सन्ति—'कथं महे असुराय अब्रवीः', 'पित्रे हरये कथमब्रवीः', 'पृश्निं दक्षिणां ददावान्', 'त्वं मनसा अचिकित्सीः' अत्र चतुर्थे वाक्ये मानसिकचिकित्सायाः सङ्केतो वर्तते। महत्त्वपूर्णोऽयं विषयः। तत्र प्रथममन्त्रस्य 'पुनर्मघ' इत्यस्योत्तरं द्वितीये मन्त्रे—'न कामेन पुनर्मघो भवामि' इति परं पुरुषार्थस्य परिश्रमस्य च कार्यं कठिनतरं भवति। अतः सर्वेषां कृते तदसाध्यत्वं द्रढयति—'कं संचक्षे' इति।

तथैव द्वितीये मन्त्रे अथर्वाणं प्रति—'हे अथर्वन् त्वं केन काव्येन जातेन जातवेदा असि?' इति परिचयात्मकः प्रश्नः सुस्पष्टः।

अस्यैवोत्तरं तृतीये मन्त्रे—'यद् अहं धरिष्ये (तत्) मे व्रतं न दासः आर्यः मीमाय' अर्थादहं यं नियमं पद्धतिं व्रतं वा स्वीकरोमि तद् विधिवत् पालयामि। तं दास आर्यो वा कोऽपि खण्डयितुं नास्ति समर्थः। अत्रारब्धकार्यस्य फलप्राप्तिं यावत् करणस्योपदेशः, तथैवान्योऽन्यविरुद्धाचरणशीलयोरार्य-दासयोः विशिष्टो मान्यः समर्थश्चाथर्वा सामाजिकराजनीतिकादिविषयेषु नेता शासकश्च प्रतीयते।

अग्रेऽथर्वा स्वोत्पत्तिपरिचयानन्तरं स्वगुणं योग्यतां च प्रकटयति—'सत्यमहं गभीरः' इति तृतीयेनैव। राजनीतिके जगति गाम्भीर्यमेको विशिष्टगुणो मन्यते। अथर्वा विशेषरूपेण गभीर आसीदत एव स सर्वदा सफलोऽभवत्।

अस्य परिचयं लब्ध्वा वरुणस्तस्याथर्वणो गुणान् गायति चतुर्थमन्त्रे—

'त्वदन्यः कवितरः न'
'त्वदन्यः मेधया धीरतरः न'
'त्वं त्वा विश्वा भुवनानि वेत्थ'
'मायी जनः त्वं बिभाय' स्पष्टार्थः।

---

१. ऋ० १।८३।५। २. अथर्व० ७।१०४।१।
३. अथर्व० ५।११।

पञ्चमे—'रजसः परः किम् अन्यद् अस्ति ?' 'किं परेण अवरम् ?'
षष्ठेऽस्यैवोत्तरम्—'रजस एकं परम् अन्यद् अस्ति ।'
'पर एकेन दुर्णशं चित् अर्वाक्' ।

तत्राथर्वण . आर्थिकप्राशासनिकदण्डविधानान्वितानि वचनान्यपि लभ्यन्ते। यथा—सप्तमे 'पुनर्मघेषु भूरि अनवद्यानि' षष्ठे—'पणयः अधोवचसः भवन्तु' 'दासा भूमिं नीचैरपसर्पन्तु'। सदाचरणशीलः पणी (व्यवसायी) धर्मेण व्यवसायं कुर्वन् धनमभिवर्धयेद्, दण्डभाग् न भवेदिति। तद्यथा सप्तमे— 'एतावतः पणिनो मा सु अभिभत्'। इत्थं सूक्तान्तर्गतानां प्रमुखाणां वाक्यानां विचारो जातः।

## अङ्गिरसः परिचयः—

अस्मिन्नेव प्रसङ्गेऽथर्वणा सह सम्बद्धोऽङ्गिरःशब्दो विविच्यते। पूर्वमेवाथर्वण उत्पत्तिविचार आनुषङ्गिकत्वेन समागतस्याङ्गिरसः पौराणिकमतेन जन्मादि विवेचितमेव यत्रायं मुखोद्भवः ब्रह्मणो मानसपुत्रत्वेनोक्तः[1]। कोशानुसारेणायं वज्रकुलोत्पन्नो मनुना ययातिना भृगुणा च सहोल्लिखितः। स्वं प्राचीनतमं मन्यमानोऽयमङ्गिरा दध्यङ्प्रियमेधकण्वात्रिभिः सहाप्युल्लिखितो लभ्यते। यथा—

**दध्यङ् ह मे जनुषं पूर्वो अङ्गिराः प्रियमेधः कण्वो अत्रिर्मनुर्विदुस्ते मे पूर्वे मनुर्विदुः। तेषां देवेष्वायतिरस्माकं तेषु नाभयः[2]।**

अङ्गिरसः सत्रे इन्द्रः सरमां प्रैषयत्। अस्मादुत्पन्नोऽग्निः क्वचिदङ्गिरोनाम्नाऽपि दृश्यते। यथा—

**यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि।**
**तवेत् तत् सत्यमङ्गिरः[3]॥**

अङ्गिरसः पुत्रो बृहस्पतिः सर्वविश्रुतः। केषाञ्चिन्मतेनासुर इवाङ्गिरा अपि सर्वदा पराजितः[4]। तत्रैवास्योत्पत्तिः मृत्युदेहाद् रसनिष्कासनानन्तरं जाता। एवं च क्षारजलस्य वरुणस्य चोत्पत्तेरनन्तरं मृत्युशरीरादङ्गिरसो जन्म सूच्यते, यतोऽयं वस्तुतोऽमाङ्गलिको घोरश्चासीत्। अङ्गिरसः सकाशाद् ब्रह्म विंशत्यङ्गिरसः ऋषीन् उदपादयत्।

अङ्गिरसां घोराभिचारयुक्ताया यातुविद्याया रक्षोविद्यायाश्च परम्परा

१. प्राचीनचरित्रकोशः पृ० ९, ऋ० १।५१।४ (सायणः); ऋ० १।३१।१७, ८।४३।१३। अपि च १। ६२। ३।
२. ऋ० १।१३९।९; ३. ऋ० १।१।६;
४. अथर्ववेद एवं गोपथब्राह्मण—पृ० २६५।

वैदिकमन्त्रपूर्वाऽवबुध्यते। एतेषां वेदः (ज्ञानं) अर्थदैव्या जात्या सम्बद्धः। ईदृशा घोरा अभिचारा आङ्गिरसा उच्यन्ते।

इत्थमङ्गिरसा सम्बद्धा विपुला सामग्री वेदपुराणादिषु लभ्यते, येन व्यज्यते यदङ्गिरा अथर्वणो भिन्नस्तथैवायमपि व्यक्तिरूपेणाथर्ववेदग्रन्थद्रष्टृ-रूपेण च प्रसिद्धः।

अथर्वाङ्गिरसः—तत्र केषाञ्चिन्मतेनास्य चतुर्थवेदस्याद्यं नाम एवाथर्वाङ्गिरस इति वर्तते। मन्येऽस्मिन् वेदे अथर्वाङ्गिरसोः समानत्वेन कर्तृत्वं वर्तते। यथा माङ्गलिकपक्षस्याधिकारी अथर्वा, तथाऽमाङ्गलिकपक्षस्याधिकारी अङ्गिराः। अथर्वाङ्गिरःश्रुते( घोरमङ्गलयोः )र्ज्ञानं कुन्ती प्राप्तवती[1]।

अथर्वाङ्गिरस उत्पत्तिः—पारिवारिकसम्बन्धेनाप्यथर्वाङ्गिरसोरिवाथर्वाङ्गिरस उत्पत्तेः पृथग् वर्णनं लभ्यते। अस्य मातुर्नाम सती। यथा भागवते—

प्रजापतेरङ्गिरसः स्वधा पत्नी पितॄनथ।
अथर्वाङ्गिरसं वेदं पुत्रत्वे चाकरोत् सती[2]॥

अथर्वाङ्गिरस इति समस्तपदस्योल्लेखो वेदेषु बहुत्र वर्णितः। यथा—

यस्मादृचो अपातक्षन्यजुर्यस्मादपाकषन्।
सामानि यस्य लोमान्यथर्वाङ्गिरसो मुखम्[3]॥

महाभारतादिषु[4] 'अथर्वाङ्गिरसि श्रुतम्', 'कुशलमथर्वाङ्गिरसे', 'कृत्याम् अथर्वाङ्गिरसीम्', 'अथर्वाङ्गिरसीः श्रुतीः' इत्यादि प्रमाणान्यप्यस्य पार्थक्यं सूचयन्ति स्पष्टतः।

## भृग्वङ्गिरसौ—

उपर्युक्तैः शब्दैः सह भृगुशब्दोऽपि व्यक्तिरूपेण वेदद्रष्टृत्वेन च प्रकृतप्रसङ्गे विवेचनीयोऽस्ति। तत्र भृगोः सामान्यतो जन्मकर्मादिविषयस्तु प्रसिद्ध एव। अत्र इदमेव चिन्तनीयमस्ति यदनेन वेदेन सह भृगोः सम्बन्धः कीदृक् कथं च वर्तते।

तत्राधुनिकानां विचारेणाथर्वाऽङ्गिरा भृगुश्चेति त्रीणि नामानि समानार्थकानि अन्योन्यसम्बद्धाख्यानात्मकानि सन्ति तथा चैतेषां सम्बन्धोऽग्नेरुत्पादनेन पूजनेन च सह वर्तते[5]। वेदेष्विमेऽन्योन्यं सम्बद्धाः। क्वचिच्चाथर्वणाथर्वाङ्गिरसा च सह भृगुर्दृश्यते[6]। शतपथे तु भृग्वङ्गिरसावीदृशौ सम्मिलितौ यदिमौ पर्यायवाचिनावभवताम्। यथा—'यत्र वै भृगवो वाङ्गिरसो वा स्वर्गं लोकं समाश्नुवत

१. अथर्ववेद एवं गोपथब्राह्मण, पृ० २६७–६९। २. श्रीमद्भा० ६।६।१९।
३. अथर्व० १०।७।२०।
४. अथर्ववेद एवं गोपथब्राह्मण–पृ० १३, सोद्धरणानि प्रमाणानि।
५. तत्रैव पृ०–१९।
६. ऋ० १०।१४।६, अथर्वणा सह १०।९२।१०, अङ्गिरसा सह ८।४३।१३।

तच्च्यवनो वा भार्गवश्च्यवनो वाऽऽङ्गिरसस्तदेव जीर्णिः कृत्यारूपो जहे।[1] भृगुरयं क्वचिदङ्गिरसः पर्यायः, क्वचिच्चाथर्वणः पर्यायः। यथा गोपथे—'अथर्वाणश्च ह वा आङ्गिरसश्च भृगुश्चक्षुषी तद्ब्रह्माभिव्यपश्यंस्तदजानन्वयं वा इदं सर्वं यद् भृग्वङ्गिरस इति[2]।' एतौ समानरूपेण भृगोर्दृष्टिं गतौ"। अयं भृगुरुभयोः शान्तघोरयोः प्रवृत्त्योः संयोजकः। अत एवायं भृगुः क्वचिद् भृग्वङ्गिरसविद्, भृगुवेदः, भृग्वङ्गिरस इत्यादिनाम्ना प्रयुक्तः[3] उपनिषद्ब्राह्मणादिष्वथर्वणः प्रतिनिधिश्चावबुध्यते।

## ब्रह्मवेदः—

क्वचिदस्य चतुर्थवेदस्य ब्रह्मवेद इत्यभिधानमपि लभ्यते। यथा—

**सैषैकाक्षरा ऋग्ब्रह्मणस्तपसोऽग्रे प्रादुर्बभूव ब्रह्मवेदस्याथर्वणं शुक्रमत एव मन्त्राः प्रादुर्बभूवुः[4]।**

अनेन प्रकारेणावबुध्यते यदस्य चतुर्थवेदस्य प्रमुखतोऽथर्वाङ्गिरोभ्यां भृगुभिश्च सह विशेषसम्बन्धोऽस्ति, येषां पृथक् पृथक् कर्तृत्वं वर्तते। अतोऽस्य नामान्यपि—अथर्वाङ्गिरोवेदः, अथर्ववेदः, अङ्गिरोवेदः, भृग्वङ्गिरोवेदः, ब्रह्मवेद इत्युचितमेव।

अत्रास्य चतुर्थवेदस्य द्रष्टृत्वेनानेके ऋषयो भवेयुः परं तत्र प्राधान्यमथर्वणः एवानुभूयते। मन्ये सामाजिकराजनीतिकविषयेष्वग्रणीः, प्रथमः, मान्यश्च आचार्यं अथर्वा एव आसीद्, यस्यैवोपकृता आश्रिताश्च सर्वे नीतिज्ञा बृहस्पति-कौटिल्यादयो यैरथर्वणः प्रेरणया समये समये तस्यैव राजनीतिकलायाः राज शास्त्रस्य च प्रयोगेण स्वराष्ट्रसमाजयोः शान्तिसंरक्षणोपायाः स्वग्रन्थेषु प्रदर्शिताः।

तत्रेदं सत्यमनुभूयते यद् वेदस्यास्य विशिष्टमहत्त्वे स्थितेऽप्यस्य संरक्षणे ऋगादिवेदेभ्यः कठिनतरा विघ्नाः समुत्पद्यन्ते। अस्य विषयस्य सम्यग् ज्ञातारः वैपुल्येन नैवोपलभ्यन्ते सुखेन। उचितमेवेदं प्रतिभाति। यतो जगत्यपि सर्वेषामनु-भवो भवति यद् विशिष्टं महार्हं वस्तु बाहुल्येन सुगमतया च नैव भवति सर्वसुलभम्। तत्तु अल्पांशेनैव तिष्ठति।

## राजनीतिशास्त्रस्योद्गमे मतभेदः—

तत्र प्रथमतो यूनानदेशीयैः प्राचीननगराण्युपजीव्यैव राजनीतिशास्त्रस्या-

१. श० ब्रा० ४।१।५।१। २. गो० ब्रा० १।२।२२।
३. अथर्ववेद एवं गोपथब्राह्मण—पृ० २८८।
४. गो० ब्रा० १।१।२२, अपि च वै० सू० १।१, गो० ब्रा० १।२।१६, १।२।१९, १।५।१५, १।५।१९ इत्यादि।

रम्भः कृत इत्याधुनिकानां मतम्[१]। परं वेदादिप्राचीनग्रन्थानां पारम्परिकपद्धत्याध्ययनेनेदमवगम्यते यद् विषयोऽयं तत्र तत्र प्रसङ्गानुसारेण क्वचिद् विस्तरेण क्वचित् समासेन च वर्णितः। इदमेवावधार्य प्रथमतो राजशब्दस्य संक्षेपेण विचारः क्रियते यद्यपि शब्दस्यास्य विस्तरेण स्पष्टतश्च विवेचनमानुषङ्गिकरूपेण यथावसरं कृतमस्ति।

## राड्-विराट्-शब्दविचारः—

'राज्' (क्विप्) शब्दस्य सामान्यार्था दीप्तिशोभाशौर्यक्षात्रशासकत्वादयः। तत्र पृथक् पृथग्रूपेण राजशब्दपूर्वका धर्मनीतिशासनशास्त्रशब्दा विशेषेण प्रकाशन्ते। वेदेषु शब्दस्यास्य दार्शनिकसामाजिकादिविचाराणां सङ्केता लभ्यन्ते।

दार्शनिकदृष्ट्या विचारिते सति पुरुषसूक्तस्थो 'विराड्' ईदृगवस्थायाश्चित्रं पुरः स्थाप यति, यत्र ब्रह्माण्डरूपराज्यस्य संचालनं तस्य सहायक साधनानामुत्पादनं च कयाचित् सर्वसामर्थ्यसम्पन्नया विशिष्टशक्त्या प्रावर्तत। अस्मिन् पुरुषसूक्ते सङ्केतितस्य चातुर्वर्ण्यस्य वर्णनेनास्य विराट्शब्दार्थस्य सामाजिकं रूपमपि पुरस्तिष्ठति।

व्यावहारिक( सामाजिकैतिहासिकशासनिकादि )दृष्ट्या परिशीलनेनानुमीयते यत् प्रारम्भकाले समाजः सुयोग्यशासनशासकयोरभावे परस्परं भयाकुलः; नासीत् तदा कोऽपि प्रभुर्य आध्यात्मिकाधिभौतिकाधिदैविकांस्तापान् नियमानुसारेण सामाजिकवैधिकनैतिकान् कठिनतरान् प्रश्नांश्च निवारयितुं प्रभवेत्, तदा आपत्काले सम्भूयसमुत्थानस्य भावनया यः कल्याणकरः सर्वानुमोदितः स्वशक्तिसम्पन्नाद्यर्थकस्य बोधको वस्तुविशेषः समुत्पन्नः, स एव 'विराड्' इत्युच्यते वेदेषु यस्य विचारो राजराज्ययोर्विवरणेऽस्मिन्नेव निबन्धेऽग्रे वर्तते।

इत्थं प्रसङ्गानुसारेणात्रान्तर्गतो 'राट्'-शब्दो लोकसंरक्षणस्य शौर्यस्य शासनस्य च बोधकः। पुराकाले प्रवृत्तिरियं क्षत्रियेष्वनुभूता तात्कालिकैरन्वेषकैः, यतो हि वेदादिग्रन्थेषु शब्दोऽयं क्षत्रियवाचकः। यथा—

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्योऽभवत्[२]।

तथैव—यथेमां वाचं कल्याणीमावदानि जनेभ्यः। ब्रह्मराजन्याभ्याम्[३]॥

अपि चामरे—मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्[४]।

इत्यादिनानुमीयते यदिदं राजपदं क्षत्रिया अलमकुर्वन्, कालान्तरेणैते राजानः क्षत्रियशब्दवाच्या अभवन्निति।

## राजशब्दसम्बद्धानां धर्मशासनादीनां विमर्शः

सन्दर्भेऽस्मिन् राजशब्देनान्वीयमाना धर्मशासनादिशब्दा अर्थविशेषान्

---

१. राजनीतिशास्त्र-पृ० १। २. अथर्व० १९।६।६। ३. यजु० २६।२।
४. द्वि० का० क्ष० व० १, विशेष द्र० हिन्दूराज्यशास्त्र-पृ० ८।

प्रतिपादयन्ति यतः केवलं राजशब्देनैव विषयस्यास्य व्यवस्थितं प्रतिपादनमशक्यम्। तत्र भवत्यावश्यको धर्मशासननीत्यादीनां योगः, येन सुव्यवस्थितवैधानिकरूपेणाग्रिमं प्रजापालनं दुष्टनिवारणं किमुत राष्ट्रस्य समाजस्य च सुसञ्चालनं सम्भवति।

वेदोत्तरतो विशेषेण महाभारतग्रन्थे राजशब्देन सह धर्मशब्दः[1] श्रूयते, यत्र वैदिकग्रन्थेषु सन्दर्भेऽस्मिन् धर्मशब्दो लभ्यते, तत्र स नीत्यर्थक एवावबुध्यते। राजा धर्मपतिरासीत्[2]। यद्यपि धर्मशब्देन व्यवहारस्य कर्तव्याकर्तव्ययोरुपदेशो लभ्यते, अर्थाद् धर्मशास्त्रे नीतिशास्त्रस्य किञ्चित्समावेशोऽपि जायते, तथाप्यनयोः कश्चिद् भेदो वर्तत एव। धर्मशास्त्रं ब्राह्मणशास्त्रं वक्तुं शक्यते, तथा च नीतिशास्त्रं क्षत्रियशास्त्रम्। धर्मशास्त्रं तु केवलं विधिनिषेधयोरुपदेशकम्। नीतिशास्त्रं तु बलपूर्वकमन्यायनियन्त्रकसाधनानां विधानं करोति। धर्मशास्त्रं शान्तिमय्यामवस्थायामुपयुक्तं भवति। नीतिशास्त्रं तु सर्वदैवोपयुक्तं भवति। धर्मशास्त्रं तु सुव्यवस्थितराज्यसमाजयोरुपकारकं भवति, नीतिशास्त्रं तु अव्यवस्थितराज्यसमाजयोर्नियन्त्रणे समर्थम्। प्रसङ्गानुसारेण धर्मशास्त्रापेक्षया नीतिशास्त्रमधिकं शक्तिसम्पन्नं विलोक्यते। अत एव यत्र महाभारते उपर्युक्तानुसारेण धर्मस्य महत्त्वं प्रतिपादितं वर्तते, तत्रैव धर्मशब्दो नीत्यर्थको वर्तते। तथैव तत्र ब्रह्मकृतलक्षाध्यायप्रमाणात्मक-[3]नीतिशास्त्रस्याप्युल्लेखो वर्तत एव। अनेन व्यज्यते यत् महाभारतात् पूर्वमपि नीतिशास्त्रमासीदिति। मनुनाऽपि पुरैव नीतिशास्त्रस्य महत्त्वं स्वीकृत्य धर्मस्य प्रतिभूर्दण्ड उक्तः।

उपर्युक्तेन विचारेणावगम्यते यद् विषयस्यास्य परिपोषणार्थं धर्मापेक्षया नीतिर्विशेषेण प्रबला।

## दण्डनीतिः—

राजनीते राजशास्त्रस्य वाऽऽरम्भकाले प्रायः सर्वेषां विचारकाणां पुरतः एको जटिलः प्रश्नः समायाति। यथा—एतद्विषयप्रतिपादकस्य शास्त्रस्य किं नाम भवेत्। राजनीतिः, राजनीतिदर्शनम्, राज्यशास्त्रम्, अर्थशास्त्रम्, नीतिशास्त्रं,दण्डनीतिः,शासनशास्त्रम्, तुलनात्मकौ शासनशासकौ वेत्यादिषु नाममु किमुपयुक्तम्। तथैव एतेषां शब्दानां सन्दर्भानुयायिन अर्थाश्च के—इत्यादि।

पुराकाले वेदोत्तरवर्तिग्रन्थेषु राजशास्त्रीयाणां विषयाणां कृते दण्डनीतिशब्दस्य प्रयोगो लभ्यते। यथा—

त्रयी चान्वीक्षिकी चैव वार्ता च भरतर्षभ।
दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः[4]॥

---

१. महाभा० शा० ६३।२७–२९, वि० द्र० हिन्दूराज्यशास्त्र–पृ० ४–५।
२. श० ब्रा० ५।३।३।६–९। ३. महाभा० शा० ५९।२९।
४. तत्रैव ५९।३३।

अपि च—आन्वीक्षिकी, त्रयी वार्ता दण्डनीतिश्चेति विद्याः। त्रयी वार्ता दण्डनीतिश्चेति मानवाः। त्रयीविशषो ह्यान्वीक्षिकी, वार्ता दण्डनीतिश्चेति बार्हस्पत्याः। संवरणमात्रं हि त्रयी लोकयात्राविद इति। दण्डनीतिरेका विद्येत्यौशनसाः। तस्यां हि सर्वविद्यारम्भाः प्रतिबद्धा इति। चतस्र एव विद्या इति कौटिल्यः। तथैवाग्रे—

दण्डनीतेर्महत्त्वम्—'चतसृणां विद्यानां सम्प्रदायानुसारेण विभाजनं तथैव सर्वासु विद्यासु दण्डनीतेः वैशिष्ट्यं व्यावहारिकत्वं च व्यज्यते। अतोऽत्रादौ दण्डनीतेर्महत्त्वं तस्योपयोगश्चान्वेषणीयः। तत्र कौटिल्यः दण्डनीतिं विधाय तस्याः फलं लिखति—

'आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः। तस्य नीतिर्दण्डनीतिः। अलब्धलाभार्था लब्धपरिरक्षिणी रक्षितविवर्धनी, वृद्धस्य तीर्थेषु प्रतिपादनी च[1]।'

महाभारते— दण्डनीतिः स्वधर्मेभ्यश्चातुर्वर्ण्यं नियच्छति।
प्रयुक्ता स्वामिना सम्यगधर्मेभ्यो नियच्छति॥
चातुर्वर्ण्ये स्वकर्मस्थे मर्यादानामसङ्करे।
दण्डनीतिकृते क्षेमे प्रजानामकुतोभये॥
दण्ड्यं दण्डयति नो यः पापदण्डसमन्वितः।
तस्य राष्ट्रे न सन्देहो मात्स्यो न्यायः प्रकीर्तितः[2]॥

अन्तिमे श्लोके गुरुणापि राष्ट्रे नियन्त्रणार्थं दण्ड एव प्रकीर्तितः।

## ऋग्वेदे दण्डचर्चा—

मनुना तु दण्डराजयोः पक्षं पुरःस्थाप्य दण्ड एव प्रशंसितः—

स राजा पुरुषो दण्डः स नेता शासिता च सः।
चतुर्णामाश्रमाणां च धर्मस्य प्रतिभूः स्मृतः[3]॥

अत्र मन्वादिभिः प्रयुक्तो दण्डो वेदमूलक एव यतः ऋग्वेदत[4] एव शब्दस्यास्य ज्ञानमवगम्यते यद् दण्डनीतेराधारः। अथर्ववेदेऽपि शब्दोऽयं श्रूयते—

यद्दण्डेन यदिष्वा यद्वारुर्हरसा कृतम्।
तस्य त्वमसि निष्कृतिः सेमं निष्कृधि पूरुषम्[5]॥

अत्र मन्त्रस्य दण्डशब्दस्य शस्त्ररूपोऽर्थः। अपि च कर्मकाण्डेषु यत्र तत्र दीक्षा( ब्रह्मचर्यसंन्यासादि )विधौ दण्डस्योपयोगी गोसर्पादिनिबर्हणार्थकः

१. अर्थशा० १।३।
२. महाभा० शा० ६९।७६, वि० द्र० हिन्दूराज्यशास्त्र पृ० ३३–३४।
३. मनु० ७।१७, तु० 'स च औशनस्यां दण्डनीत्यां परं प्रावीण्यमुपगतः' मुद्राराक्षसम् १।
४. ऋ० ७।३३।६।
५. अथर्व० ५।५।४, तु० ऐ० ब्रा० २।३५, श० ब्रा० १।५।४।६।

स्पष्टतः सूच्यते। एवमेवाथर्ववेदे शब्दोऽयं येन केन प्रकारेण नियन्त्रणस्य शासनस्य स्थैर्यस्य च सूचकः[१]।

राजदण्डार्थेऽस्य प्रयोगाः ब्राह्मणसूत्रादिषु बहुत्र दृश्यन्ते। यथा शतपथे—'पृष्ठतस्तूष्णीमेव दण्डैर्घ्नन्ति। तं दण्डैर्घ्नन्तो दण्डवधमतिनयन्ति तस्माद्राजा दण्ड्यो यदेनं दण्डवधमतिनयन्ति'।[२]

अनेन दण्डोऽयं प्रसङ्गानुसारेण राज्ञः (शासकस्य) दमनशीलतायाः परिणामः, वेदेष्वपराधानां तत्कर्तॄणां पापिनां दुष्टानाम्, तेषां कृते विहितानां दण्डानां च विस्तरेण श्रवणात्। तत्राऽसदाचरणशीलानां कृते या दमनपद्धतिः संचाल्यते सैव दण्ड इत्युच्यते। यथा—

निवृत्तिरसदाचाराद्दमनं दण्डतश्च तत्।
येन सन्दम्यते जन्तुरुपायो दण्ड एव सः॥[३]

अपि च— दम्भो दण्ड इति ख्यातस्तस्माद्दण्डो महीपतिः।
तस्य नीतिर्दण्डनीतिर्नयनान्नीतिरुच्यते॥[४]

मनुना तु प्रारम्भे एव—दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः[५]॥

इति प्रोक्तम्। महाभारतादिषु दण्डस्य पर्याप्तान्युदाहरणान्युपलभ्यन्ते[६] (अस्मिन्नेव निबन्धे वक्ष्यते राज्याभिषेकवर्णने)।

इत्थमुपायेषु चतुर्थो दण्डशब्दः स्वशासकीयगुणविशेषेण नीत्या सह सम्बद्धः। यथा—'दण्डनीतिः'। कालान्तरेण शब्दस्यास्य पूर्ववर्तिदण्डशब्दो न्यग्भूतः। एवं च 'नीति'शब्द एवावशिष्टः। अनन्तरं नीतेः स्थानं नयशब्देन गृहीतम्। अस्या नीतेः नयशास्त्रमित्यपि नाम लभ्यते कोशेषु।

## अर्थशास्त्रविचारः—

अस्मिन्नेव सन्दर्भे अर्थशास्त्रस्यापि विचार आवश्यकः। अर्थशास्त्रस्याभिप्रायो जनपदसम्बद्धं शास्त्रम्। कौटिल्येनैव ग्रन्थारम्भे लिखितम्—'पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि प्रायशस्तानि संहृत्यैकमिदमर्थशास्त्रं कृतम्।' तथैव—'मनुष्याणां वृत्तिरर्थः, मनुष्यवती भूमि[७]-

१. अथर्व० ९।१।२१, १०।४।९, ८।२७, १८।२।५९।
२. श० ५।४।४।७।
३. शुक्रनीति० ४।४१।
४. तत्रैव १।१५७।
५. म० स्मृ० ७।१८।
६. संस्कृतहिन्दीकोश पृ० ४४५।
७. तत्राऽथर्ववेदीयभूमिसूक्तेन (१२.१) स्पष्टं भवति यदर्थशास्त्रस्योपजीव्यमिदमेव सूक्तं वर्तते। विदितमस्तु यत् केवलमथर्ववेदे एवेदृशं भूमिसूक्तं लभ्यते।

रित्यर्थः, तस्याः पृथिव्या लाभपालनोपायशास्त्रमर्थशास्त्रमिति[1]।' अनेनापि स्पष्टतः नीतेः एव प्रतिपादनं भवति।

शास्त्रशासने—उपर्युक्तराजधर्मशब्दवदेव शासनशास्त्रशब्दावपि राज-शब्देन सह प्रयुज्येते परं यादृगर्थो नीतिशब्देन व्यज्यते, न व्यज्यते तादृगर्थः उपर्युक्ताभ्यां शब्दाभ्याम्। शासनशब्दे हठात् प्राबल्यमनुभूयते। तत्र शासकः मनःपूतमाचरति। तत्र केवलं निरङ्कुशं राजतन्त्रं भवति, सर्वसुखदं लोकतन्त्रं कथमपि न सम्भवति।

शास्त्रशब्देनापि पूर्णतया राज्यव्यवहारस्य चातुर्यपूर्णं सुसंचालनम-सम्भवम्। नीतिशब्देनैव तत्सम्भवम्। राजशास्त्रराज्यशासनयोरिव शास्त्र-शासनयोरपि नीत्यान्वितत्वं दृश्यते क्वचित्। परं तत्र इमे नामनी शिक्षाप्रदे स्तः, इमे प्रयोगार्थं प्रत्यक्षसंचालनार्थं वा निरर्थके। अत्र राजनीतिशब्द एवोपयुक्तः।

## राजविज्ञानादिशब्दविचारः—

विज्ञाननाम्नि तादृशोऽर्थो नैव लभ्यते यथा नीतौ, यतः विज्ञानं सिद्धं भवति। तत्र मतद्वयस्य फलपरिवर्तनस्य च कृते नास्त्यवकाशः। राजनीतिस्तु परिवर्तनशीला भवति। तत्र समयानुसारेण व्यवहारकरणस्य सङ्केतो भवति।

राजदर्शनशब्देऽपि तादृशी शक्तिर्नास्ति। दर्शनशब्दे तु केवलं कल्पनाया भावनायाश्च प्राबल्यं दृश्यते। अत एव तदपि न युक्तम्।

एकायनम्–अस्य कृते छान्दोग्ये[2] एकायनमिति प्राचीनमभिधानं लभ्यते।

मन्मते एकम् अयनम् ( राज्यशासनार्थं नीतिशास्त्ररूपं वर्त्म ) यस्य तद् एकायनं नीतिशास्त्रम्। अनेन प्रकारेणास्य शब्दस्य व्युत्पत्तिर्भवितुमर्हति। यतो हि राजतन्त्रपद्धतौ प्रजातन्त्रपद्धतौ वा यदि मतवैभिन्न्यम् अर्थात् विभिन्नायन-त्वं स्यात् तर्हि तत्र राज्यशासने समग्रा सफलता नैव संभवति। अतो राज्यशासने एकायनत्वं (एकतन्त्रत्वं) एव श्रेयस्करम्। एवमेव प्रसङ्गेऽस्मिन् इत्यप्यनुमातुं शक्येत यद् गवामयनादिश्रौतयागवत् तत्कालेऽपि राज्यशासनकामार्थमेकायना-भिधः कोऽपि यागः स्यादिति। यः निश्चितकालावधि यावत् राज्यशासनं कर्तुं भवतिस्म इत्यनुमीयते। तत्र गु० व० पट्टाभिरामशास्त्रिपादैः आश्वलायनशब्द-स्यैका[3] नूतना व्युत्पत्तिः प्रदर्शिता वर्तते, तामेवाश्रित्योपर्युक्तं मतं संस्थापितमत्र।

इत्थं विविधेषु नामसु राजनीतिशब्द एव समर्थो भवति। परमत्रैकः प्रश्नः पुरस्तिष्ठति यद् विषयोऽयं धर्मनीतिविज्ञानार्थादिनाम्ना कथं प्रयुक्तोऽभूद् विविधेषु रूपेषु। यथा राजधर्मराजनीत्यादिरिति। तस्यैकमेव कारणमवबुध्यते

---

१. अर्थशा० अधि० १५ अ० १। २. छा० उ०–शा० भा० ७।१।२।

३. आश्वलायनश्रौतसूत्रभूमिका। अपि च। तत्र मीमांसायाम् ( ६।६।९ ) जैमिनि-मतानुसारेण समानकल्पानामेवाधिकार इति निर्णयः।

यद् यस्मिन् स्थले यादृशः प्रसङ्गो भवति तत्र कालमानदेशपरिस्थित्यनुसारेणैव तत्तन्नामकरणं क्रियते विदुषा ।

महाभारतादिषु तत्तत्स्थलेषु समाजशास्त्रस्य किमुत मानवस्य पारमार्थिकं कल्याणं मनसि धृत्वा कृतमस्ति विवेचनं राजनीतेः । तत्रापि विशेषतः भारतादीनां रचना एव पारमार्थिकी, यतो हि महाभारते येषां पात्राणां देवभावेन स्वीकारो वर्तते, कौटिल्यस्यार्थशास्त्रे तेषामेव पात्राणामैतिहासिकभावेन स्वीकारोऽस्ति ।

**राजनीतेः शास्त्रान्तरेण सह सम्बन्धः—**

अस्य शास्त्रस्य विषयान्तराणि सहयोगीनि वर्तन्ते । यथा—इतिहासः, अर्थ-(सम्पत्ति)शास्त्रम्, समाजशास्त्रम्, आचारशास्त्रम्, मनोविज्ञानम्, संविधानम्, भूगोलश्च ।

इतिहासः—अत्र सम्बद्धविषयस्यैतिहासिकशास्त्रं परमोपकारकमवगम्यते । प्राचीने काले कीदृशानि राज्यान्यासन्, तत्र शासकाः नृपा वा कथं राज्यं समचालयन्, तेषां कीदृशानि फलानि समुत्पन्नानीत्यादि, तथैव तत्र समागत-विघ्नानां केनोपायैः निरासः कृतस्तैरित्यादि विज्ञायते इतिहासेन । वेदेऽपि—'यथा पूर्वं बभूवुः', 'यथा पूर्वमकल्पयत्', 'अन्वाचरन्तु', इत्यादीतिहाससूचकानां प्रयोगाः लभ्यन्ते । यथा—

**यस्यां पूर्वे पूर्वजना विचक्रिरे यस्यां देवा असुरानभ्यवर्तयन् ।**[1]

तथैव—ऋग्वेदोक्तकश्यपस्याश्रमे मदोत्कटनामकस्तत्पुत्रो बभूव । सः काशिराजेन सत्कृतः । सः तत्र राजशास्त्रानुसारिणीं व्यवस्थामकरोत् । तेन ब्रह्मचारिणा मदोत्कटेनेदं राजशास्त्रमुपनयनान्ते भिक्षायां लब्धमासीत्[2] । वेदेऽप्ययं प्राचीनर्षित्वेन प्रसिद्धः । अयं राजनीतिज्ञोऽपि विज्ञायते । कश्यपोऽयं विश्वकर्म-भौवनस्य राज्याभिषेकमकारयत् ।[3]

यत्र कश्यपः राजशास्त्रविदासीत्तत्र तस्य पुत्रो मदोत्कटोऽपि राजनीति-कुशल एव विज्ञायते पुराणेषु । अदितिसम्भवस्य मदोत्कटविनायकस्य स्त्रीणां साहाय्येन देवान्तकनरान्तकादिदुष्टानां पराजयस्य कथा गणेशपुराणे पठ्यते[4] ।

वेदेष्वपि क्वचित् स्त्रीणां पुरुषैः सह स्वतन्त्रतो वा राज्यशासनसम्बद्धं वर्णनं लभ्यते ।

अर्थशास्त्रम्—अर्थशास्त्रेण सहास्य निकटसम्बन्धोऽस्ति । उक्तमस्ति 'सर्वारम्भास्तण्डुलप्रस्थमूलाः' । इति न्यायेन राज्ये पदे-पदे धनमावश्यकं भवति अतो धनागमस्य विवेचनमपि राजनीतौ भवति । वेदेऽपि[5] धनप्रापकाणामुपायानां विवरणानि सन्ति ।

---

१. अथर्व० १२।१।५ ।

२. 'पुरुषार्थ' एप्रिल १९५५ ई० पृ० १३ । ३. वै० को० पृ० ८८ ।

४. गणेशपु०—२/५—६, विशेषद्र०—प्राचीन चरित्र को० १८० ।

५. अस्यैव निबन्धस्यार्थनीतिवर्णने ।

तथैव व्यापारस्य करग्रहणस्य च बहून्युदाहरणानि लभ्यन्ते वेदेषु, येषां विचारः निबन्धेऽस्मिन्नुचितावसरे वर्तते।

समाजशास्त्रम्—समाजशास्त्रं राजनीतिशास्त्रात् पृथक् कर्तुं नैव शक्यते, यतः राज्यात्पूर्वं समाजो जातः। तत्र शान्तिसंरक्षणार्थं च राजनीतिरावश्यको। अत एव प्रस्तुतशास्त्रस्य निर्माणं जातम्। यतो हि सामाजिका नियमाः सामाजिकपद्धतयश्च विच्छिन्ना न भवेयुः। तन्नियन्त्रणार्थमेव समाजेन सम्मिल्य राज्ञः प्रतिष्ठा कृता।

आचारशास्त्रम्—आचारशास्त्रात् राजनीतेरुत्पत्तिरिति केषाञ्चिन्मतम्। तन्नायुक्तम्। यतो हि आचारादेवोचितानुचितयोः परिज्ञानं भवति।

मनोविज्ञानम्—मनोविज्ञानस्याध्ययनाद् राजनीतौ सौकर्यं भवति। यद्यपि विस्तृतं मनोविज्ञानमाधुनिकं भाति, परं बीजरूपेणास्यापि विचारो वेदेषु विद्यत एव। विशेषेणाथर्ववेदे मनश्चर्चावलोक्यते। इदमुचितमेव। यतो हि अथर्ववेदस्य देवता चन्द्रमा वर्तते। यस्योत्पत्तिर्मनसो भवति। तद्यथा—'चन्द्रमा मनसो जातः' इति। तात्पर्यमस्य शास्त्रस्य प्रभावेण वयं राज्यस्य जनानां शासकानाम्, कर्मचारिणाम्, व्यापारिणां च मानसिकमध्ययनं विधाय निर्णयं कर्तुं प्रभवामः। गुप्तचराणां कृते तु मानसिकाध्ययनस्य नितान्तमावश्यकता भवति।

संविधानशास्त्रम्—शास्त्रमिदं राज्यस्य विविधाङ्गानां परिभाषां सीमां च निर्धारयति। तत्त्वमिदं वक्ष्यमाणे ऋतविवेचने स्पष्टं भविष्यति। न्यायशास्त्रस्य निर्माणमेतदर्थमेव संजातम्।

भूगोलः—मानवोपरि भौतिकीनां परिस्थितीनां भौगोलिकदशायाश्चात्यधिकः प्रभावः आपतति। विविधभौगोलिकपरिस्थित्यापि राजनीतिः प्रभाविता भवति।

## वैदेशिकानां भारतीयसंस्कृतिनाशचेष्टा—

सर्वसम्मतो विचारो वर्तते यद् भारतोपरि चिरकालादेव विविधानां वैदेशिकानामाक्रमणानि स्वदेशे च नानाविधानि मिथो वैराणि च संजातानि। तत्रापि यवन( यूनान )देशमूर्धन्यस्य फिलिपपुत्रस्य अलक्षेन्द्रापरनामकस्य सिकन्दरस्य विश्वविजययात्राप्रसङ्गेन भारतोपरि भयङ्करमाक्रमणं संजातम्। तदाक्रमणं नासीत् सामान्यम्। यद्यपि पुरापि बहव आक्रामकाः व्यापारिणः सार्थवाहा यात्रिणश्च स्व-स्वदेशाद् भारते समागताः। तेषु केषाञ्चिदुल्लेखोऽपि वर्तते क्वचित् क्वचित् प्रसङ्गेषु। तथापि यवनदेशस्यास्य सिकन्दरस्य यात्रायाः विवरणं सुस्पष्टं सुव्यवस्थितं च लभ्यते। अनेन तात्कालिकसमाजस्य राजनीतेः संस्कृतेश्चापि सुव्यवस्थितं विवरणं लभ्यते। तत्र हेतुः सिकन्दरस्य सर्वसाधनसम्पन्नत्वम्, तस्य तात्कालिकेनाम्भिना पुरुणा च सह सङ्गरः। अयं सिकन्दरश्चन्द्रगुप्तप्रभावस्याभिज्ञ आसीत्। तथा च तत्र विशिष्टनीतिनिपुणस्य कौटिल्यस्योपस्थितिरासीत्। तात्कालिकानां भारतीयानां सुसम्पन्नताया नीतिनैपुण्यस्य

सुशासनस्य च प्रभावेण यवनदेशीया भयभीता अभवन्निति काशीप्रसादजायसवालप्रभृतीनां ग्रन्थैर्ज्ञायते। एतेषामेव कथनैर्यवनदेशवासिभिः स्वयात्राविवरणेषु पक्षपातोऽपि कृतः स्वलेखेषु इत्यवबुध्यते। तथैव तेऽत्रत्यसुव्यवस्थितराजनीतिसाहित्येन प्रत्यक्षानुभूतराज्यसंचालनेन च बहूपकृताः।

इत्थं विज्ञायते यद् भारते चिरकालाद् वेदेभ्यः विविधैर्विषयैः साकं राजनैतिकी विचारधाराऽपि प्रवहमाना विद्यते। यत्रासङ्ख्याता ग्रन्थाः महर्षिभिर्निर्मिताः। येषु अतिस्वल्पा अधुना नामतो लभ्यन्ते। तात्पर्यमेतद्देशस्य संस्कृतिपरिचायका ग्रन्थाः शत्रुभिः येन केन प्रकारेण विनाशिताः। सामान्यतो राजनीतौ दृश्यते यद् कस्यचिदुन्नतदेशस्य समाजस्य कीर्तेरादर्शसभ्यतायाश्च विनाशार्थं सर्वप्रथमं वैदेशिका मत्सरेण तेषां वाङ्मयं विनाशयन्ति। भारतेऽपोदमेव दृश्यते चिरकालतः। परं देशस्य महत् सौभाग्यं वर्तते, यदत्र सर्वदा कल्याणचिन्तकाः सरस्वतीपुत्राः अवातरन्, समये समये क्षतिपूर्ति कुर्वन्तो देशस्यास्य गौरवं समवर्धयंश्च।

## भारतीयसंस्कृतेराधाराः—

'जातककालीन भारतीय संस्कृति'[1] पुस्तकानुसारेण ऋग्वेदत एव भारतस्य महती सभ्यता सङ्घटनप्रवृत्तिश्चावबुध्येते। गृह-ग्राम-विड्जन-राष्ट्रेषु (राज्येषु) क्रमेण विभक्ताद्या वैदिकी धारा एव क्रमेण रामायण-महाभारतजातकयुगेष्ववतीर्य कौटिल्यं यावत् प्रवहिता। तत्र प्रतियुगं सभ्यतायाः प्रभावेण भूयो भूय आगच्छन्ती कौटिल्येनाप्यायिता सर्वैर्नीतिज्ञैरास्वादिताऽस्माकं पुरतो वर्तते। निश्चयेन परम्परेयं पुरातनी दृश्यते। यथा—

युगान्तेऽन्तर्हितान्वेदान् सेतिहासान्महर्षिभिः।
लेभिरे तपसा पूर्वं ह्यनुज्ञाताः स्वयम्भुवा॥

नियमोऽयं वेदमूलकः। यथा—'स्तोमं जनयामि नव्यम्'[2]। अपि च—'युगे युगे विदथ्यं गृणद्भ्योऽग्ने रयिं यशसं धेहि नव्यसीम्[3]॥'

## कौटिल्यस्याथर्वशाखीयत्वम्—

अनुमीयते यदथर्ववेदस्य राजनीतिसम्बद्धा विचाराः कौटिल्येन सङ्कलिताः। यद्यपि कौटिल्यस्य स्पष्टतः वेदशाखादियुक्तः परिचयो नैव लभ्यते तथाप्यनुमानेन तस्य परिचयोऽन्वेष्यते। यथा—

तस्याथर्ववेदं प्रत्याकर्षणम्। अथर्ववेदीयनिरङ्कुशराजतन्त्रस्य सन्तुलितसाम्यवादस्य साङ्कुशराजतन्त्रस्य चानुकरणम्। यथा—'मानुषेणाग्निना त्रिरपसव्यं परिगतमन्तःपुरमग्निरन्यो न दहति; न चात्रान्योऽग्निर्ज्वलति;

---

१. जातककालीन भारतीय संस्कृति—पृ० ४९–५०।
२. ऋ०—१।१०९।२।
३. ऋ०—६।८।५।

वैद्युतेन भस्मना मृत्संयुक्तेन कनकवारिणाऽवलिप्तं च[1]। तत्राऽथर्वमन्त्रोच्चार-पूर्वकोपायकरणस्योल्लेखः वर्तते। तत्रैव—'पुरोहितमुदितोदितकुलशीलं षडङ्गे वेदे दैवे निमित्ते दण्डनीत्यां चाभिविनीतमापदां दैवमानुषीणाम् अथर्वभिरुपायैश्च प्रतिकर्तारं कुर्वीत।'[2] तेन स्वग्रन्थस्यारम्भ एव पृथ्वीशब्देन कृतोऽस्ति। अथर्ववेदेऽपि पृथ्वीसूक्तस्य सुतरां महत्त्वमिति न तिरोहितम्।

तत्र बिहारप्रदेशेऽधुनाप्येको वर्गः लभ्यते यस्याभिधानं वर्तते 'आथर्वप' 'चणकिया' वा। कौण्डिन्यगोत्रीया एते आत्मनः कौटिल्यवंशीयान् मन्यन्ते। चणकियाशब्देन कौटिल्यस्य बोधो भवति। यतः अष्टविधाभिधानस्य कौटिल्यस्यैकं नाम चाणक्य इति प्रसिद्धम्। यथा—

वात्सायनो मल्लनागः कुटिलश्चणकात्मजः।
द्रामिलः पक्षिलस्वामी विष्णुगुप्तोऽङ्गुलश्च सः॥[3]

तत्र यदि उपर्युक्ताथर्वणचणकियाशब्दौ पर्यायौ, तर्हि कौटिल्यस्तु स्पष्टत एवाथर्वणीयः सिद्धः उपर्युक्तचणकियार्थर्वणानां वर्गीकरणं वर्तमानेषु भूमिहारेषु भवेत्। अधुनापि भूमिहाराः राजनीतौ कुशलाः निपुणाश्च मन्यन्ते। अपि च अत्राथर्ववेदीयभूमिसूक्तस्य वैशिष्ट्येन कौटिल्यस्याऽऽथर्वणीयत्वेन भूमिहाराणां कौटिल्यवंशीयत्वेन च तस्यार्थशास्त्रप्रणयनं युक्तिसंगतमिति विज्ञायते। भवतु नाम। तात्पर्यमथर्ववेदस्य राजनीतेरन्वेषणेऽर्थशास्त्रस्याथर्ववेदेन सह तुलनात्मकम ध्ययनं परमोपयोगि भविष्यतीति।

## वैदिकराजनीत्यन्वेषणे विमर्शनीया विषयाः——

तत्र वैदिकराजनीतेः अध्ययनात्पूर्वं केचिन्नियमा अवश्यं विमृश्याः। अन्यथा विनायकं प्रकुर्वाणो रचयामास वानरमितिवदर्थः सम्भवेत्। सन्दर्भेऽस्मिन् श्रीपाद-अमृतडांगे, मोहनलालमहतो 'वियोगी', डा० देवोदत्तशुक्लप्रभृतीनां क्रमेण 'भारत', 'जातककालीन भारतीय संस्कृति', 'प्राचीन भारत में जनतन्त्र' इत्यादिपुस्तकेषु सुव्यक्ता विचारा मननीयाः सन्ति। तेषामनुसारेण वेदाः परोक्षप्रिया भवन्ति। यथा—'परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः[4]।' अस्यैव विचारस्य पोषणं श्रीमद्भागवतेऽपि यथा—

परोक्षवादो वेदोऽयं बालानामनुशासनम्।
कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा[5]॥

एवं च वेदेषु राजनैतिका विचारा अप्युपर्युक्तया शैल्या वर्णिताः। व्यवस्थेयं न केवला वेदेषु दृश्यते, तदुत्तरग्रन्थेषु पुराणेतिहाससाहित्यादिष्वपि। क्वचिद्

---

१. अर्थशा० अधि० १ अ० १९। २. तत्रैव–१।८।

३. सिद्धहेमचन्द्रस्याभिधानचिन्तामणेः श्लोकोऽयम्। द्र० हिन्दूराज्यशास्त्र–पृ० २०।

४. प्रायः प्रतिब्राह्मणग्रन्थं खण्डसमाप्तौ वाक्यमिदं दृश्यते।

५. श्रीमद्भा०–११।३।४४।

वेदोक्तानां गूढविषयाणां स्फोटः कौटिल्यादिभिः कृतः। अनेनापि वैदिकं रहस्यं व्यज्यते। यथा—सहस्राक्षः (इन्द्रः)। अत्र सहस्राक्षविशेषणयुक्तस्येन्द्रस्य प्रायः पुराणेषु सहस्रभगरूपेण वर्णनं लभ्यते। परं तस्य राजनीतिपरकोऽर्थः भिन्न एव वर्तते। यथा—'इन्द्रस्य हि मन्त्रिपरिषदृषीणां सहस्रम्। स तच्चक्षुः तस्मादिमं द्वचक्षं सहस्राक्षमाहुः[1]।'

एवमेव 'सत्र'शब्दः। यत्र सर्वे सम्मिल्य विचारपूर्वकं निर्णयमकुर्वन्। इत्थमेव जनः, पञ्चप्रदिशः, अग्निः, महानग्निरित्यादिशब्दा अपि गूढार्थका भवन्ति।

(१) वैदिकग्रन्थेषु शासकः राजा उच्यते स्म। वेदेषु प्रायः सर्वत्र शासकस्य राजशब्देन प्रयुक्तत्वाद् भ्रमेणाधुनिका अनुमन्यन्ते यद् वेदोक्तो राजा केवलं राजतन्त्रसम्बद्ध इति।

(२) राज्ञः स्तुतौ देवोपमायाः प्रयोगेऽपि भ्रमो भवति। वस्तुतस्तत्र विविधैर्देवैः सह राज्ञः कर्तव्यस्य सङ्केतो वर्तते।

(३) पितृसत्तायाः प्राचुर्येण कुलपरम्परा प्रशस्यते, वेदेष्वपि कुलपरम्परायाः महत्त्वं वर्तते, तत्रापि योग्यतामभिवीक्ष्यैव राजवंशजाः अभिषिच्यन्ते स्म।

(४) विड्शब्दं प्रजार्थम् एव स्वीकुर्वन्ति केचन विद्वांसः। परं तत्र विड्शब्दस्य विशेषार्थो वर्तते आर्थिकः, धनयुक्तः।

(५) महानग्निः शब्दोऽपि राजसभायाः वाचकः।

(६) विट्पतिः आर्थिकसमितेः प्रधानम्, अस्यार्थः केवलं राजा नरपतिः वा न भवति।

इत्थं वैदिकराजनीत्यन्वेषणे प्रसङ्गानुसारेण तात्पर्यं निर्णेतुं शक्यते। वेदेषु केवलं राजतन्त्रमेव नास्ति, तस्य मूलं लोकतन्त्रात्मकमेव वर्तते। यतः तत्र संविदासिद्धान्तस्य, निर्वाचनस्य, योग्यताविहीनस्य राज्यपदात् पृथक्करणस्य च विपुलान्युदाहरणानि लभ्यन्ते। तथैव च शक्तिपृथक्करणस्य विकेन्द्रीकरणस्य च दृष्टान्ताः लभ्यन्ते। यदि नाम तत्र राज्ञः एव प्राधान्यं स्यात् तर्हि मन्त्रिमण्डलस्य तत्तद्विभागाधिकारिणां वर्णनस्य विविधानां सभासमितीनां च प्रयोजनमेव न स्यात्। अनेन राजतन्त्रेऽपि जनतन्त्रस्यैव समर्थनं भवति इति विज्ञायते।

## वैदिकशासनचर्चा—

अथर्ववेदे राजनीत्यनुसारेण नीतिपूर्वकशासनस्यापि वर्णनं लभ्यते। परं तत्रैको महत्त्वपूर्णः प्रश्नः उपतिष्ठते, सोऽयं यदत्र प्राशासनिकं तत्त्वं कुत आयाति, अस्य परम्पराक्रमः कीदृशश्च? तत्र पठ्यते यत् पुरा राजराज्ययोश्चाभाव आसीत् तर्हि शासनस्य का वार्ता? परं वास्तविकमिदं नास्ति। वेदाध्ययनेन विज्ञायते यत् प्राशासनिकं तत्त्वं राजराज्याभ्यां पूर्वमेवोत्पन्नम्। अयं शासनिको विधिः प्राकृतिकः दैवो वा वक्तुं शक्यते। वस्तुतः तत्र ह्रासवादमवलम्ब्य प्रारम्भकालस्य विचारे कृते सतीदमेवावगम्यते यद् राजराज्याभ्यां पूर्वं सर्वे जनाः

१. अर्थशा०—अधि० १ अ० १४।

कामक्रोधादिविहीना आसन् । सर्वे जनाः स्व-स्वाधिकारकर्तव्ययोः पालनमकुर्वन् । तदा स्वभावत एव सर्वे नीतियुक्ता आसन् । न केवलं मानवः प्रत्युत सर्वे ग्रह-नक्षत्रादयोऽपि प्रकृतिनियन्त्रिताः स्व-स्वकर्तव्यमपालयन् । तत्र ऋतमेव हेतुः । अतोऽत्र तदेव विचार्यते आदौ ।

## वैदिकशासनस्य मूलम् ऋतम्—

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ।
ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥
समुद्रादर्णवादधि संवत्सरो अजायत ।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
दिवं च पृथिवीं चान्तरिक्षमथो स्वः[1] ॥

अत्र श्रुतेरनुसारेण तपस उत्पन्नात् सर्वोपजीव्यत्वात् सर्वाद्याद् ऋतादेव समस्तब्रह्माण्डस्योत्पत्तिः, यस्मिन् सूर्यचन्द्रनदीसमुद्रकालादीनामुत्पत्तिरभूत्, यच्च सर्वेषां भौतिकानां नियन्त्रकं येन सर्वे शक्ताश्चेत्यवगम्यते वेदेभ्यः । सन्दर्भेऽस्मिन् अथर्ववेदस्य 'व्रात्य'[2] सूक्ते ये सामाजिकशासनादिविचाराः लभ्यन्ते तेऽपि मननीयाः सुधीभिः । प्रायः 'व्रात्यः संस्कारहीनः' इति सर्वविश्रुतः, परमत्रास्यार्थोऽस्मात् किञ्चिद् भिन्नः प्रतीयते । यथा—

(१) समूहः समाजः सङ्घो जनतायाः कृते हितकारी च ।
(२) समाजोत्पन्नः सङ्घस्थश्च ।
(३) समूहपालकः पतिः स्वामी वा ।
(४) व्रतार्थं समर्पितः, व्रततत्परस्तपस्वी नियमानुष्ठाता ब्रह्मचारी च ।
(५) भ्रमणशीलः परिव्राजकः संन्यासी उपदेशकश्च ।

तत्र ऊर्ध्वभागाद् ऋतं सत्यं सूर्यचन्द्रादयश्च ब्रह्मचारिणः सहायका भवन्ति[3] ।

ऋतस्याधारः—वेदेऽस्य ऋतस्याधारविषयकः प्रश्नः । यथा—

कस्मिन्नङ्गे तपो अस्याधितिष्ठति कस्मिन्नङ्ग ऋतमस्याध्याहितम् ।
क्व व्रतं क्व श्रद्धास्य तिष्ठति कस्मिन्नङ्गे सत्यमस्य प्रतिष्ठितम्[4] ॥

अस्यैवोत्तरम्—स्कम्भे लोकाः स्कम्भे तपः स्कम्भेऽध्यृतमाहितम् ।
स्कम्भ त्वा वेद प्रत्यक्षमिन्द्रे सर्वं समाहितम्[5] ॥

---

१. ऋ०—१०।१९०।१–३ ।

२. १५ काण्डं सम्पूर्णम्, विशेषद्र० अथर्ववेद–ब्रह्मविद्याप्रकरणम् पृ० ३०७ ।

३. अथर्ववेद–ब्रह्मविद्याप्रकरण पृ० ३१०, तत्रैव क्षत्रियविभागान्तर्गतवैदिकस्वराज्यस्य विचारा लभ्यन्ते ।

४. अथर्व०–१०।७।१ । ५. तत्रैव–१०।७।२९ ।

अर्थादस्य श्रमोत्पन्नस्य ऋतस्याधारः सुस्थिरः सर्वाधारश्च परमात्मा एव वर्तते । अनेनैव प्रकारेणेदम् ऋतम् उच्छिष्टस्याश्रितत्वेन स्वीकृतम् । यथा—

ऋतं सत्यं तपो राष्ट्रं श्रमो धर्मश्च कर्म च ।
भूतं भविष्यदुच्छिष्टे वीर्यं लक्ष्मीर्बलं बले[1] ॥

अत्र मन्त्रे 'बलम् बले' इति पदद्वयस्य सप्ताङ्गीय सह बलेन तुलना कर्तुं शक्यते । अत्रोच्छिष्टस्यार्थ ऊर्ध्वभागस्थ इति विशेषः ।

उपर्युक्तमन्त्राणामवलोकनेनेदं सुनिश्चितं भवति यदिदम् 'ऋतम्' परमातिशायि सर्वश्रेष्ठं सुनिश्चितं गुणविशिष्टं च वर्तते । प्रथमतोऽसत्यार्थे 'अनृतं' प्रचलितं तदेव पश्चात् नञ्समासं विहाय सत्यार्थे ऋतशब्देन प्रसिद्धं जातम् । नैसर्गिकसामाजिकयोर्विध्योराधारभूतस्यास्य ऋतस्य बहून्युदाहरणानि ऋगादिषु लभ्यन्ते । यथा—

ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं धर्ममीमहे ॥
ऋतस्य पन्थामनु तिस्र आगुस्त्रयो धर्मा अनु रेत आगुः ।
प्रजामेका जिन्वत्यूर्जमेका राष्ट्रमेका रक्षति देवयूनाम् ॥
ऋतेन गुप्त ऋतुभिश्च सर्वैर्भूतेन गुप्तो भव्येन चाहम् ।
मा मा प्रापत्पाप्मा मोत मृत्युरन्तर्दधेऽहं सलिलेन वाचः[2] ॥

निर्ऋतिः—ऋताद्विरुद्धा निर्ऋतिर्वर्तते या पूर्णरूपेण सदोषाऽस्ति । इयमेवानृतमसत्यञ्च कथ्यते । इयं कथमपि ऋतसत्ययोः पुरः नैव तिष्ठति । ऋतेनैव सर्वं गोप्यते[3] । इदमेव सर्वश्रेष्ठं धनं वर्तते । यथा—

परि चिन्मर्तो द्रविणं ममन्यादृतस्य पथा नमसा विवासेत् ।
उत स्वेन क्रतुना सं वदेत श्रेयांसं दक्षं मनसा जगृभ्यात्[4] ॥

अत एवास्य प्राप्तिरस्य मार्गस्यानुसरणञ्च श्रेयस्करमुच्यते । यथा—

अदर्शि गातुरुरवे वरीयसी पन्था ऋतस्य समयंस्त रश्मिभिश्चक्षुर्भगस्य रश्मिभिः ।
द्युक्षं मित्रस्य सादनमर्यम्णो वरुणस्य च ।
अथा दधाते बृहदुक्थ्यं वय उपस्तुत्यं बृहद्वयः[5] ॥

अपि च—त्वं रक्षसे प्रदिशश्चतस्रस्त्वं शोचिषा नभसी वि भासि ।
त्वमिमा विश्वा भुवनानु तिष्ठस ऋतस्य
पन्थामन्वेषि विद्वांस्तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः
सुधायां मा धेहि परमे व्योमन्[6] ॥

---

१. अथर्व० ११।७।१७ ।

२. अथर्व० ६।३६।१, ८।९।१३; १७।१।२९; अपि च ऋ० १।१०५।१२, १।१३६।२, १।१४४।७, २।२८।४, ४।२३।८–१० ।

३. अथर्व० १७।१।२९ ।

४. ऋ० १०।३१।२ ।

५. ऋ० १।१३६।२ ।

६. अथर्व० १७।१।१६ ।

तथैव— ऋतस्य पन्थामनु पश्य साध्वङ्गिरसः सुकृतो येन यन्ति ।
तेभिर्याहि पथिभिः स्वर्गं यत्रादित्या
मधु भक्षयन्ति तृतीये नाके अधि वि श्रयस्व[1] ॥

बृहस्पतिनापि ऋतेनैव सदसद्विवेको लब्धः । यथा—

इमां धियं सप्तशीर्ष्णीं पिता न ऋतप्रजातां बृहतीमविन्दत् ।
तुरीयं स्विज्जनयद्विश्वजन्योऽयास्य उक्थमिन्द्राय शंसन् ॥
ऋतं शंसन्त ऋजु दीध्याना दिवस्पुत्रासो असुरस्य वीराः ।
विप्रं पदमङ्गिरसो दधाना यज्ञस्य धाम प्रथमं मनन्त ॥
हंसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन् ।
बृहस्पतिरभिकनिक्रदद्गा उत प्रास्तौदुच्च विद्वां अगायत्[2] ॥

विदुषां मतेन विधेः (ऋतस्य) स्रोतो वेद एव । तत्र आपस्तम्बसूत्रमवलम्ब्य कृतया हरदत्तस्य टीकया इदमेव प्रमाणितं भवति[3] । सर्वविश्रुतं वर्तते यद् वेदे यज्ञस्य (सङ्गतिकरणस्य) प्रामुख्यं वर्तते । यज्ञोऽपि सत्यस्यैव वाचकः ।

**ऋतसत्ये—**

उपर्युक्तेष्वधिकांशस्थलेषु ऋतेन सह सत्यस्य वर्णनं दृष्टवा सामान्यतो जनैः ऋतसत्ये पर्यायवाचित्वेन विज्ञायेते । यद्यप्युभयोः सामान्यार्थ एक एव, तथापि सूक्ष्मदृष्ट्या अनयोर्भेदः । अनयोः सूक्ष्मभेदे सत्यपि इमे अभिन्ने परस्परसहायके च स्तः । यथा रूप्यकमुद्रायाः परस्परविरुद्धौ चित्राङ्कितौ भागौ, तथाऽपि रूप्यकार्थमुभावुपकारकौ भवतः तथैव ऋतसत्ययोरपि सम्बन्धः । तत्र पूर्वमेव लिखितमस्ति यदस्य सम्बन्धो मुख्यतो नैतिकशिक्षया शासनेन च सह वर्तते । शासने एक एव मुख्याधिकारी वर्तते, तथाऽपि विविधानामन्येषां क्रमिकाधिकारिणामपि कार्यं भवत्यावश्यकम् । अनेनैव प्रकारेण कार्यसौकर्यार्थं समानार्थकयोः ऋतसत्ययोरपि भेद उपयुक्तो ज्ञायते । अत्र प्रसङ्गे ऋतसत्ययोरपि पृथक् पृथग् विभागौ तदधिकारिणौ तयोः समयश्च निर्धारितः । यथा—

| | ऋतम् | सत्यम् |
|---|---|---|
| अधिकारी– | वरुणः | मित्रः ( सूर्यः ) |
| भोग्यकालः– | रात्रिः | दिनम् |

क्वचिदिमौ सम्मिल्य मैत्रावरुणो भवति । श्रौतप्रकरणेऽनयोः कृते यथास्थानं पृथक् पृथगाहुतीनां विधानं वर्तते । श्रौते सायंप्रातर्हवनप्रयोगे पर्युक्षणक्रियया इदमेव स्पष्टं भवति । यथा —

ऋतसत्याभ्यां त्वा पर्युक्ष्यामीति सायम् ।
सत्यऋताभ्यां त्वा पर्युक्ष्यामीति प्रातः[4] ॥

---

१. अथर्व० १८।४।३ । २. अथर्व० २०।९१।१–३ ।
३. प्राचीन भारत में राज्य और न्यायपालिका–पृ० ६७ ।
४. तै० ब्रा० २।१ ।

अयमेव वरुणः क्वचिदग्निनाम्नाप्यभिधीयते। यथा सायंप्रातःसन्ध्यया हवनेन च विज्ञायते। तत्र 'अग्निश्च मा मन्युश्च ...' तथैव 'अग्नये स्वाहा प्रजापतये स्वाहा' इति सायंविधानम्। सूर्यश्च मामन्युश्च.........' तथैव 'सूर्याय स्वाहा, प्रजापतये स्वाहा' इति प्रातर्विधानं वर्तते।

वेदेषु वरुणमित्रयोः सम्बन्धे यत्र वरुण एव श्रेयान् वर्तते, तत्राथर्ववेदीय-रात्रिसूक्ते वरुणं पुरस्कृत्याशेषराज्यशासनस्य सञ्चालनस्य वर्णनं लभ्यते। आस्यां सहैव यमेन्द्रादीनामपि शासने उपयोगो भवति[1]।

**प्रशासनीयविभागाः—**

तत्र शासनव्यवस्थाया न्यायपालिकाया विधिपालिकायाः कार्यपालिकायाश्चोत्पत्तिर्न केवलं वेदोत्तरकालीना, प्रत्युत वैदेशिकानां कृतिरित्याधुनिका मन्यन्ते। यथार्थत एता वेदमूलका एव।

**सर्वोच्चाधिकारी वरुणः—**

तत्र 'वृ' धातुः वरणचयनवेष्टनाद्यर्थकः। अत्र भाष्याध्ययनेन ज्ञायते यदयं शासनान्तर्गतो न्यायाधिकारी वर्तते। अयं यत्र तत्रापराधदण्डगुप्तचरन्यायालय-वादविवादादिना सम्बद्धोऽस्ति। प्रसङ्गेऽस्मिन् वरुणस्य योग्यतां विज्ञातुमथर्व-वेदस्य 'सत्यानृतसमीक्षकसूक्तम्'[2] पर्याप्तं मन्यते। सूक्तेऽस्मिन् न्यायाधिकरण-सम्बन्धिनो बहवः शब्दा लभ्यन्ते।

ऋग्वेदे वरुणं प्रति कश्चित् पापभीतः क्षमायाचकः निवेदयति। यथा—

किमाग आस वरुण ज्येष्ठं यत्स्तोतारं जिघांससि सखायम्।
प्र तन्मे वोचो दूलभ स्वधावोऽव त्वानेना नमसा तुर इयाम्[3]॥

अयं वरुणोऽग्नितुल्यः प्रखरः सर्वज्ञः श्रेष्ठो विशेषतो नीतिशास्त्रज्ञश्च निरूपितः। अस्य हस्ते सशृङ्खलापाशः सूचयति यदयमुग्रो दण्डाधिकारी। अयमेवाशय एतेषां मन्त्राणामपि वर्तते। यथा—

ये ते पाशा वरुण सप्तसप्त त्रेधा तिष्ठन्ति विषिता रुशन्तः।
छिनन्तु सर्वे अनृतं वदन्तं यः सत्यवाद्यति तं सृजन्तु[4]॥

अपि च—युवं वस्त्राणि पीवसा वसाथे युवोरच्छिद्रा मन्तवो ह सर्गाः।
अवातिरतमनृतानि विश्व ऋतेन मित्रावरुणा सचेथे[5]॥

अयं स्वीकृतापराधं जनं मुञ्चत्यपि[6]।

वैदिकदेवशास्त्रानुसारेण[7] वरुणस्य व्यक्तित्वं मानवीयरूपे शारीरिकपक्षा-

---

१. अथर्व० ४।३० (रात्रिसूक्तम्)। २. अथर्व० ४।१६।
३. ऋ० ७।८६।४। ४. अथर्व० ४।१६।६।
५. ऋ० १।१५२।१, तथैव ७।६०।५, ७।६६।१३।
६. वैदिककोश पृ० ४५७-८। ७. वैदिकदेवशास्त्र पृ० ४३।

पेक्षया नैतिकपक्षेऽधिकं विकसितम्। अस्य सहयोगिनः सूरचक्षसोऽग्निजिह्वः सहस्रचक्षुषः स्पशो दूत इत्यादयः[1]।

अस्य शासनमतीवोग्रं तथा चात्र येन केनापि प्रकारेण कूटसाक्ष्यस्य पक्षपातस्योत्कोचस्य च प्रायोऽभाव आसीत्। शासनकर्मचारिणः कर्तव्यानुसारेणैवाधिकारमलभन्त। अस्यानुशासने कोऽपि गोप्याद् गोप्यमपि पापं कर्त्तुं नाशकत्। तात्पर्यमस्य शासनं सुनियन्त्रितं सुव्यवस्थितञ्चासीत्।

सहयोगिभिः सह वरुणः—

प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः।
यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरा दधर्षीत्[2]॥
सहस्रधारेऽव ते समस्वरन्दिवो नाके मधुजिह्वा असश्चतः।
अस्य स्पशो न नि मिषन्ति भूर्णयः पदेपदे पाशिनः सन्ति सेतवः[3]॥
चक्राणासः परीणहं पृथिव्या हिरण्येन मणिना शुम्भमानाः।
न हिन्वानासस्तितिरुस्त इन्द्रं परि स्पशो अदधात्सूर्येण[4]॥
न तिष्ठन्ति न नि मिषन्त्येते देवानां स्पश इह ये चरन्ति।
अन्येन मदाहनो याहि तूयं तेन वि वृह रथ्येव चक्रा[5]॥
आदित्या अव हि ख्याताधि कूलादिव स्पशः।
सुतीर्थमर्वतो यथानु नो नेषथा सुगमनेहसो व ऊतयः सुऊतयो व ऊतयः[6]॥
इदं कवेरादित्यस्य स्वराजो विश्वानि सान्त्यभ्यस्तु मह्ना।
अति यो मन्द्रो यजथाय देवः सुकीर्तिं भिक्षे वरुणस्य भूरेः[7]॥

उपर्युक्तैर्मन्त्रैर्वरुणः अग्निना सह, सोमेन सह, दैत्यैः सह, देवैः सह, आदित्येन तथा च मित्रेण सह सर्वेषां राजैवाभवत्।

क्षत्रविशेषणेन सह वरुणो यथा—

एभिर्न इन्द्राहभिर्दशस्य दुर्मित्रासो हि क्षितयः पवन्ते।
प्रति यच्चष्टे अनृतमनेना अव द्विता वरुणो मायी नः सात्[8]॥

तथा च—अयं दशस्यन्नर्येभिरस्य दस्मो देवेभिर्वरुणो न मायी।
अयं कनीन ऋतुपा अवेद्यमिमीताररुं यश्चतुष्पात्॥

वरुणस्य सर्वोच्चाधिकाराद् रात्रेः जलमात्रस्य च सोमिताधिकारित्वमवलोक्यानुमीयते यदयमपि केनचित् प्रमादेन कालक्षेत्रयोः विशेषाधिकारी एवावस्थितः। यथा—

१. ऋ० १।२५।५, १३, १६; ७।६१।३; ७।६६।१०; ७।८७।३; अथर्व० ४।१६।४।
२. ऋ० ४।४।३।
३. ऋ० ९।७३।४।
४. ऋ० १।३३।८।
५. ऋ० १०।१०।८।
६. ऋ० ८।४७।११।
७. ऋ० २।२८।१।
८. ऋ० ७।२८।४, १०।९९।१०।

अद्भ्यस्त्वा राजा वरुणो ह्वयतु सोमस्त्वा ह्वयतु पर्वतेभ्यः ।
इन्द्रस्त्वा ह्वयतु विड्भ्य आभ्यः श्येनो भूत्वा विश आ पतेमाः[1] ॥

अयं योग्यशासनाधिकारिणामेको महानादर्शः । अयं वृष्टेरप्यधिकारी । यथा—

अपो निषिञ्चन्नसुरः पिता नः श्वसन्तु गर्गरा अपां वरुणाव नीचीरपः सृज ।
वदन्तु पृश्निबाहवो मण्डूका इरिणानु[2] ॥

वरुणस्य निवासः—वरुणस्य निवासः जले श्रूयते । यथा—

मित्रावरुणौ वृष्ट्याधिपती तौ मावताम् ।
अस्मिन्ब्रह्मण्यस्मिन्कर्मण्यस्यां पुरोधायामस्यां प्रतिष्ठायामस्यां
चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां देवहूत्यां स्वाहा ॥

अप्सु ते राजन्वरुण गृहो हिरण्ययो मिथः ।
ततो धृतव्रतो राजा सर्वा धामानि मुञ्चतु[3] ॥

क्वचिद् अनेन सह मित्रोऽप्यपां नेतृत्वेन प्रसिद्धः । यथा—मित्रावरुणौ वा अपां नेतारौ[4] ।'

इत्थं विवेचनेन विज्ञायते यदयं वरुणः स्वसहायकैः सम्मिल्य शासनस्य तिसृणां शाखानां सञ्चालनमकरोत् । अस्य सहयोगिनः स्व-स्वविभागेष्वतीव दक्षाः सन्नद्धाश्च स्वकर्तव्यं निरवहन् ।

## शासनस्य प्रमुखा विभागाः—

विदितमस्तु यद् व्यावहारिके जगति सर्वप्रथमं तपस उत्पन्नं समस्त-विधीनां नैतिकगुणानाञ्चाधारभूतं शासकोयं तत्त्वं ऋतमजायत येन सर्वे विभागाः प्रभाविता अभवन् । अधो विभागत्रयस्य संक्षिप्ता तालिका पुरःस्थाप्यते-

| | | |
|---|---|---|
| संस्थानाम[5]—इडा | सरस्वती | भारती |
| अधिकारी—इन्द्रः | यमराजः | वरुणः |
| कार्यम्[6]—राष्ट्रनिवासिनां धारणं, पोषणं नागरिकाणाञ्च | दुष्टानां संहारः राष्ट्रस्य प्रबन्धश्च[7] दण्डदानं दण्ड- | श्रेष्ठविदुषां दिव-नाम्नी सर्वोत्कृष्टा |

१. अथर्व० ३।३।३ ।
२. अथर्व० ४।१५।१२ ।
३. अथर्व० ५।२४।५, ७।८३।१ ।
४. तै० सं० ६।४।३।३ ।
५. तिस्रो देवीर्बर्हिरेदं सदन्त्विडा सरस्वती भारती । मही गृणाना । यजु० २७।१९ ।
६. होता यक्षत्समिधेन्द्रमिडस्पदे नाभा पृथिव्याऽअधि ।
दिवो वर्ष्मन्त्समिध्यत ओजिष्ठश्चर्षणीसहां वेत्वाज्यस्य होतर्यज ॥ यजु० २८।१ ।
७. वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋत-सदनमसि वरुणस्य ऋतसदनमासीद । यजु० ४।३६ ।

| | | |
|---|---|---|
| प्रबन्धः । | निर्णयश्च[1] । | सभा । विधिनिर्माणं[2] न्यायः गुप्तचराधिकारश्च[3] । |
| विभागः—कार्यकारिणी रक्षा-[4] व्यवस्था च । | दण्डदात्री सभा । | ऋतसदनम् । |

## शासनम्—

तत्र राजराज्ययोर्यावदुत्पत्तिरेव नासीत् तावद् ऋतस्यैव शासनं प्राचलत्। तदा सर्वे स्वभावत एव अनुशिष्टा आसन् । समयपरिवर्तनानन्तरं यदा जना लोभमोहादिना दुर्भावनया च संवलिताः परस्परमयुध्यन्त तदा एतत् शमयितुमुपायमन्विष्यद्भिर्विज्ञैः सम्मिल्य शासनाय राज्ञः राज्यस्य च व्यवस्था कृता । तदा शासनाधिकारः राज्ञः पुरोहितादिप्रमुखाणां राज्याधिकारिणां हस्ते समागतः ।

शासनविषये कतिपये आधुनिका विचारकाः शासनव्यवस्था वैदिककालानन्तरमेव सम्भूतेति स्वीकुर्वन्ति । यतो हि राजनीतिप्रतिपादकेषु ग्रन्थेषु विषयपरिपोषकाणां वैदिकोदाहरणानामभावो दृश्यते । तैः पाश्चात्त्यानामेव विदुषां मतानि विपुलतया प्रमाणत्वेनोद्धृतानि । भवतु नाम, विषयमवलम्ब्य यदा वेदाध्ययनं क्रियते तदा विज्ञायते यद् वेदेषु सूत्ररूपेण अस्य सर्वाङ्गीणो विचारो वर्तते, यस्य मन्वादिभिस्तेषां टीकाकारैर्मेधातिथ्यादिभिश्च वैदिकसङ्केताः स्पष्टीकृताः । सत्यमेतत् प्रतीयते यद् वेदादिप्राचीनग्रन्थेषु विषयोऽयं धर्मेण विधिना व्यवहारेण चरित्रेण न्यायेन च सहोल्लिखितः ।

विविधैर्विचारकैः न्यायशब्दस्य 'राजशासनम्', 'न्यायिकनिर्णय'श्चार्थः कृतोऽस्ति[5] । यद्यपि न्यायधर्मादिशब्दाः शासनस्य विविधेष्वर्थेषूपात्तास्तथापि शासनं स्वकीयां भिन्नामेव सत्तां स्वीकरोति ।

ऋगादिषु शब्दोऽयं स्पष्टरूपेण राजकीयशासनार्थे वर्तते[6] । तथैव यद्यप्य-

१. वाल्मीकिरामायणे यु० २१।२ ।

२. अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः ।
अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥ ऋ० १।२४।१० ।

३. अथर्व० १।३३।२; ४।१६।४ ।

४. सन्दर्भेऽस्मिन् प्रायः सर्वाणि स्वस्त्ययनशान्त्यादिसूक्तानि द्रष्टव्यानि । यथा अथर्व० १।२१।१–४ । ऋग्वेदेऽपि १०।१५२।१–५ । अपि च वि० द्र० प्राचीन भारत में जनतन्त्र पृ० ५३-५७ ।

५. प्राचीन भारत में राज्य और न्यायपालिका ( सटिप्पणम् ) पृ० १३८ ।

६. वैदिककोश ३२० पृष्ठे, प्रतीकानि—ऋ० १।११२।३, छा० उ० ५।३।७ इत्यादीनि ।

थर्ववेदीयानि 'शाशदानः'[१] 'शासदानान्'[२] 'शासदानाम्'[३] 'शासद्महे'[४] 'शासः'[५] 'शास्मि'[६] एतानि शब्दरूपाण्यपि राजशासनमेव समर्थयन्ति । तथापि 'शास' इति क्वचित् 'असिधेनुका' इत्यर्थकोऽस्ति[७] । शासनेऽस्य साधनरूपेणोपयोगो भवत्येव ।

## शासनस्य पर्यायाः—

प्रतिष्ठाशब्दोऽपि कुत्रचित् शासनायोपात्तः[८] । यद्यपि 'गृहा वै प्रतिष्ठा'[९] इति वचनेन प्रायः विद्वांसः अस्यार्थो गृहमिति लिखन्ति[१०] । वेदेषु राजादेशादि-वर्णनेषु विषयस्यास्य सामग्री लभ्यते वैपुल्येन । इत्थमुपर्युक्तैरुदाहरणैः शासन-तत्त्वं सम्यक् प्रत्यपादि ।

तत्र विचारकैर्येन केनापि प्रकारेण वैदिककेन्द्रीयप्रान्तीयमाण्डलिकनाग-रिकग्रामीणशासनानां विचारः कृतोऽस्ति[११] । यतो हि तत्तत्क्षेत्रविशेषाणामधि-कारिणां साधिकारयोग्यतादिपूर्वकं वर्णनं ग्रामणीत्यादिशब्दमाश्रित्य वेदेषु पठ्यते । परं विषयोऽयं निश्चयात्मकं वक्तुं नैव शक्यते । अयमन्वेषणार्हः ।

## शासनस्यावश्यकता तस्य महत्त्वं च—

यद्यपि विधिः नीतिः न्यायः चरित्रम् आचारः धर्मादयश्च एते शब्दाः क्वचिदेकार्थप्रतिपादकत्वेन लभ्यन्ते तथाप्यस्य शासनस्य वैशिष्टयमेभिः पृथगेव वर्तते । धर्माचारादिशब्दैस्तत्तद्विषयाणामेवोपयोगो भवति न तु पूर्णांशेन शासनस्य, यतो हि धर्माचारादीनां विषयस्तु गुरुणा अभिभावकादिभिश्च सम्पाद्यते, परं शासनस्य विशेषसम्बन्धः राज्ञा राज्येन च सहैव विज्ञायते । सामान्यतो यः कोऽपि राजसमाजपरिवारादिव्यवहारानुपेक्ष्य किञ्चिदपि विरुद्ध-माचरति, तस्य कृते संवैधानिकः क्रियमाणो व्यवहारः शासनशब्देनाभिव्यज्यते । इयमेव 'राजाज्ञा' कथ्यतेस्म । 'शास्त्रसम्मता सभ्यैः परामृष्टा वा राजाज्ञा राज-शासननाम्ना कथ्यते[१२] ।' कौटिल्यस्तु 'शासने शासनमित्याचक्षते'[१३] । इत्यनुसारे-णापि राजाज्ञा शासकीयादेशो वा शासनमित्युच्यते । तथैव—

जातिं कुलं स्थानवयःश्रुतानि कर्मर्द्धिशीलान्यथ देशकालौ ।
यौनानुबन्धं च समीक्ष्य कार्ये लेखं विदध्यात् पुरुषानुरूपम्[१४] ॥

---

१. अथर्व० १।१०।१ ।
२. अथर्व० २०।८७।४ ।
३. अथर्व० ८।४।२४ ।
४. अथर्व० ५।२।५, २०।१०७।८ ।
५. अथर्व० १।२०।४, २०।७५।२ ।
६. अथर्व० १२।२।९ ।
७. वैदिककोश पृ० ५१६ ।
८. अथर्व० ६।३२।३, ८।८।२१, शा० आ० १२।१४ ।
९. श० ब्रा० १। अ० ९।३।१८ ।
१०. वैदिककोश पृ० ३१५ ।
११. प्राचीन भारतीय शासनपद्धति पृ० १३८—१८४ ।
१२. प्राचीन भारत में राज्य और न्यायपालिका पृ० ३०३ ।
१३. अर्थशास्त्रम् अ० २, अ० १० ।
१४. तत्रैव ।

इत्यनुसारेण राज्ञः साङ्कुशत्वं सूच्यते। तथैवात्र विधानाचारादयस्तु शासनस्याङ्गत्वेन विज्ञायन्ते। शुक्रानुसारेण[1] राजशासनस्य घोषणा ढक्कानादेन चतुष्पदीयस्तम्भलेखनादिना च सूचयितव्या, यत्र कृतापराधस्य जनस्य दण्डस्याप्युल्लेखो भवेत्। मेधातिथेरनुसारेण—'तस्माद्धर्मं यमिष्टेषु स व्यवस्येन्नराधिपः',[2] 'शास्त्राचाराविरुद्धं व्यवस्येन्निश्चित्य स्थापयेन्न विचालयेत्। सा तादृशी राज्ञोऽनुज्ञा नातिक्रमणीया।' नारदः[3] राजशासनस्य स्थानं सर्वोच्चं मन्यते। कौटिल्यानुसारेण—

अनुशासद्धि धर्मेण व्यवहारेण संस्थया।
न्यायेन च चतुर्थेन चतुरन्तां महीं जयेत्॥
संस्थया धर्मशास्त्रेण शास्त्रं वा व्यावहारिकम्।
यस्मिन्नर्थे विरुद्धयेत धर्मेणार्थं विनिर्णयेत्॥
शास्त्रं विप्रतिपद्येत धर्मन्यायेन केनचित्।
न्यायस्तत्र प्रमाणं स्यात्तत्र पाठो हि नश्यति[4]॥

अनेनापि राजशासनस्यैव महत्त्वं प्रतीयते। मनुरपि[5] धर्मव्यवहारचरित्रराजशासनेषु च राजशासनमेव श्रेष्ठं मत्वा देशदृष्टशास्त्रदृष्टयोराधारादेव निर्णयं करोति। अनेन लोकव्यवहारस्य पुष्टिर्भवति। राजशासनराजविधानयोः सर्वाधिकविवादग्रस्तविषये मनुयाज्ञवल्क्ययोः परस्परं समन्वयो वर्तते। उभावप्युचितराजशासनस्य मर्यादां स्वीकृत्य समाजेन तस्य पालनं भवेदितीच्छतश्च[6]। अतः राजशासनं विधेः प्रतिकूलं नैव भवति, प्रत्युत तस्य पूरकमेव[7]।

शासनस्य सर्वोच्चाधिकारी—मन्ये राजा (नीत्या) धमणैव राज्यं करोति शास्ति च। तद्यथा—

तद्धचत्र श्रेयोरूपमत्यसृजद् धर्मम्। तदेतत्क्षत्रस्य यद्धर्मः। तस्माद्धर्मात्परं नास्ति।[8]

अनेन धर्मात् भयं राज्ञः कृते विज्ञायते, शासनं राजा करोति स्वीये शाशिते राज्ये जनतायाम्। अर्थाद् यावद् धर्मशासनयोः प्रश्नो वर्तते तावद् धर्मस्य सम्बन्धः राज्ञः कृत एव वर्तते। शासनस्य महत्त्वं तु वर्तत एव स्वस्थाने सुरक्षितम्।

---

१. शुक्रनीतिः १।३१२–१३। २. मनु० ८।१३।
३. नारद० १८।१९। ४. अर्थशा० ३।१।
५. मनु० ८।३।
६. याज्ञ० २।२१, मनु० ७।१३, याज्ञ० २।१८६।
७. विषयस्यास्य विवेचनम् 'प्राचीन भारत में राज्य और न्यायपालिका' ग्रन्थस्य, 'विधि समाज और राज्य, तथा न्यायिक प्रशासन' इति प्रकरणयोर्विशेषेणोल्लिखितं लभ्यते।
८. वृ० उ० १. ४।१४?

□ ५

निष्कर्षः—इत्थमुपयुक्तैर्विविधैरुदाहरणैः प्राक्प्रतिपादित-ऋतादिवर्णनेन चेदं निश्चितं भवति यद् वेदेषु शासनस्य पर्याप्तं वर्णनं लभ्यते। मन्ये तात्कालिकैर्विद्वद्भी राजनीतौ शासनतत्त्वस्य महत्त्वमवबुद्धमासीदनुशासनेनैव च ते स्वोत्कर्षं प्राप्नुवन्। तथैव यद्यपि प्रारम्भतः शासनं विधिमूलकं धर्ममूलकं वा भवेत् परमुत्तरोत्तरं तत् समाजानुकूलसामाजिकपरिवर्तनानुसारमेवाभवत्। यतो हि यथा वक्ष्यमाणे राजराज्ययोरुत्पत्तिविषये प्रथमतः दैवः प्राकृतिकः इति सिद्धान्त आसीत् पश्चात् सामाजिकानुबन्धापेक्षी स जातः तथैव शासनविषयेऽपि बोद्धव्यम्।

# द्वितीयोऽध्यायः

## राज्ञ उत्पत्तिर्गुणः कर्माणि तस्य वरणमभिषेकश्च—

तत्र राजराज्ययोर्विषये चिरादद्यदिनं यावन्मतान्तराणि दृश्यन्ते। आदौ रात्रिः दिनं वा, बीजाङ्कुरयोरिव विषयोऽयं स्व-स्व-मतानुसारेण विद्वद्भिः प्रतिपादितोऽस्ति। पाणिनीयव्याकरणादिशास्त्रानुसारेणादौ राजा पश्चाद् राज्यमिति। परं क्वचिद् विद्वद्भिरेतद्विरुद्धमादौ राज्यं पश्चाद् राजेति स्वीकृतमस्ति। तथैव राजराज्ययोर्युगपदुत्पत्तेरपि सङ्केता लभ्यन्ते। यद्यपि विषयोऽयं प्रकरणेऽस्मिन् पृथक् पृथग् रूपेण चर्चितस्तथाप्यत्रोपक्रमाङ्गत्वेन किञ्चित् सूच्यते।

अत्र भारतीय-वेदादिग्रन्थेषु प्रायः प्रतिविषयमुत्पत्तेः प्रथमतः प्रकारद्वयं दृश्यते-- १. नैसर्गिकी (दैवी), २. समाजनिर्मिता च। यथा प्रथमाध्याये प्रशासनस्य मूलम् ऋतमुक्तम्, यस्य महत्त्वं नैसर्गिकत्वेन व्यज्यते। तदेव ऋतमाश्रित्य स्थूलदृष्टचा सामान्यानां कृते विस्तृतशासकीयविषयस्य निर्माणं जातं समाजतः। एवमेव राजराज्ययोर्विषयेऽपि दृश्यते। यथा प्रथमं येन केनापि प्रकारेण प्रकृत्यनुकरणेन विविधां श्रेणीमुत्तीर्य समाजः सङ्घटितः। तदा निसर्गे देवजगति सूक्ष्मत्वेनाव्यक्तं राजराज्ययोस्तत्त्वमासीदेव। यथा--भूमिः। परिवारे, कुटुम्बे, आश्रयत्वेन शासकतुल्यः पिता च। तत्रैव वेदादिषु सङ्ग्रामस्यापि महत्त्वपूर्णं वर्णनं श्रूयते। सङ्घर्षशीलाः आर्याः सङ्घर्षेणैव विकसिताः सुस्थिराश्चाभवन्। अतोऽत्रैकः प्रश्नः उपतिष्ठते यदयं सङ्घर्षः केन हेतुना जातः। तत्र सामान्यनियमः भवति यत् सम्पत्तिमवलम्ब्यैव विशेषेण सङ्घर्षो भवति। सम्भवतः अत्रापि इयमेव स्थितिः स्यात्। अनेन तु सम्पत्तिभूतस्य राज्यस्यैव प्राथमिकत्वं सिद्धयति। परं तथ्यमीदृशं नास्ति। तत्र यः सङ्घर्षः यद् राज्यस्यानुमानञ्च सूच्यते तत्सर्वंमेव प्राक्कालीनस्थितेः चित्रमस्ति। अनेन त्वित्थमेव सूच्यते यदियं स्थितिर्युगपदुत्पत्तेर्निदर्शिका प्राक्कालीना। तदा समाजस्तु आसीन् परं सः अव्यवस्थितः असम्बद्धश्चासीत्। तदा तादृशान् दोषान् दूरीकर्तुं सुबुद्धैः सीमितैर्जनैः सुव्यवस्थां सम्पादयितुं शासको निर्वाचितः। मन्ये अयमेव लोकतन्त्रस्य श्रीगणेशस्तथा च प्रथमापेक्षया विकासस्य सामाजिकं नैतिकं वा द्वितीयं संस्करणमासीत्। अर्थादुपर्युक्ता समाजिकी स्थितिः प्रथमसंस्करणत्वेन विज्ञायते यत्र बीजरूपेण राज्यस्य सूक्ष्मसङ्केतो लभ्यते। तदाज्ञानस्य प्राधान्यं सूच्यते जनेषु। तत्र यः कोऽपि हठात् जनप्रेमसहिष्णुतादिभावेन विहीनः सन् निरङ्कुशत्वेन शासनमकरोत्, स्थितिरियं नासीच्चिरकालिकी। अचिरादेव द्वितीये संस्करणे स्थितिः परिवर्तिता। तत्र निर्वाचितेन राज्ञा व्यवस्थितराज्यसंस्थायाः स्वसहयोगिभिः सह सम्मिल्य संरचना कृतेत्यलं विस्तरेण।

## विराट—

अत्र विषयस्यास्य सम्यगवबोधार्थं प्रथमतः राज्ञः प्राक्स्थितेर्विचारो 'विराट्'शब्दमवलम्ब्य क्रियते ।

वस्तुतोऽयं विराट्शब्दः सम्बद्धविषयेऽतीव महत्त्वपूर्णोऽस्ति यस्य वर्णनं वेदेषु बहुरूपेषु लभ्यते । अयमेव विराट् समस्तराजराज्ययो रहस्यं स्वस्मिन् अनेकरूपेण स्थापितवानिति प्रतीयते । विषयस्यास्य सम्यक् संङ्केतो विराट्सूक्ते[1] लभ्यते ।

अस्मिन् विराट्सूक्ते षड् विभागाः (पर्यायाः) सन्ति । यस्य प्रथमे पर्यायै (विभागे) राज्ञः, तस्य साधनानाञ्च सङ्केतो लभ्यते । अग्रिमेषु पञ्चसु पर्यायेषु (विभागेषु) जनानां कृते अन्नादीनां सृष्टेर्वर्णनं लभ्यते । सूक्तमिदं पूर्[2]वसूक्तानुयायि प्रतीयते, यतो हि पूर्वसूक्ते विविधानां प्रश्नानां सङ्केतोऽस्ति, येषामुत्तराण्येवास्मिन् सूक्ते लभ्यन्ते । सूक्तस्यास्याध्ययनाद् विज्ञायते यद्यथा पुराणेषु[3] गोरूपधरायाः पृथिव्या दोहनेन पृथुना सर्वमभीष्टं लब्धं, तथैवात्रापि वर्णनं लभ्यते । मन्ये, पौराणिकं पृथ्वीदोहनमथर्वमूलकमेव वर्तते । अस्य सूक्तस्य सायणभाष्यं नैव लभ्यते । परं सातवलेकरमहोदयेनास्यातीवसुन्दरं विवेचनं कृतमस्ति[4] । सूक्तमिदं राजसमाजशास्त्रयोर्विषये नूतनां विकसितां सामग्रीं पुरतः स्थापयति । अस्य सम्यगध्ययनेन विज्ञायते यदस्मात् प्रायः नाममात्रेणैव राज्यस्योत्पत्तिरभवत् । परं तस्य समीचीना सामग्री पश्चादेव विकसिता । सूक्तेऽस्मिन् वैन्यस्य सङ्केतेन विज्ञायते यदिदं राजनीतिक्षेत्रस्य द्वितीयं संस्करणमासीत् । ब्राह्मणग्रन्थेषु पुराणेषु च वैन्यस्य पृथोः चरित्रं सविस्तरं लभ्यते येनानुमीयते यत् पुरा प्रारम्भावस्थायां सामान्यसमाजस्य सङ्घटनानन्तरं राज्यमात्रस्योत्पत्तिः सञ्जाता, यत्र च प्रसङ्गेन निरङ्कुशराजतन्त्रस्याभिवृद्धिर्बभूव । फलतः सामान्यजनेषु या उत्पीडनस्यावस्था समागता तस्या एव निवारणार्थं पृथोराविर्भावो जात इति । अस्यैव विषयस्यात्रेदं सूक्तमवलम्ब्य विस्तरेण विचारः क्रियते । मन्ये अनेन सम्बद्धविषये सौकर्यं भविष्यति ।

वक्ष्यमाणे राज्यवर्णने विराट्शब्दस्य विचारो वर्तते, यत्राऽराजवैराज्येअपि चर्चिते स्तः ।

वैराज्यानन्तरमेवाराजकस्योत्पत्तिरित्यस्यमाकं वक्ष्यमाणः पक्षः । तमेवानुसृत्यात्र विविच्यते । तत्र-'विराड्वा[5] इदमग्र आसीत्तस्या जातायाः सर्वमबिभेदियमेवेदं भविष्यती'ति श्रूयते । इत्यनेन 'विराट्' शब्दस्य द्वावर्थौ वर्तेते-विशेषेण राजते शोभते इति, विगतः राट् यस्मादिति च । अत्रोपलब्धयोविराट्शब्दार्थयोरध्ययनेन स्पष्टं प्रतीयते यदुपर्युक्तयोः परस्परविरुद्धयोः शब्दार्थयोः किञ्चिद्विशिष्टं महत्त्वं

१. अथर्व० ८।१०।१-१३ (प्रथमपर्यायः)। २. अथर्व० ८।९ ।

३. श्रीमद्भा० ४।१८ । ४. अथर्ववेद-मातृभूमि और स्वराज्य पृ० ४४-५४ ।

५. अथर्व० ८।१०(१)। १ ।

वर्तते। अत्र विराट्सूक्तस्थो विराट् पुरुषसूक्तस्थात् विराट्शब्दात् अवश्यमेव भिन्नो वर्तते। तत्र 'विराडग्रे समभवद्विराजो अधि पूरुषः। स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः'[1] इति मन्त्रे दैवसिद्धान्तस्य राज्यतत्त्वमात्रस्यैव प्रतिपादनं भवति। तत्र 'विशेषेण राजते' अयमेवार्थो ग्राह्यो वर्तते। परमत्रत्या स्थितिरस्मात् किञ्चिद् भिन्ना वर्तते। 'विराड् वा इदमग्र आसीत्तस्या जातायाः सर्वमबिभेदियमेवेदं भविष्यति' इत्यत्र 'वा' विकल्पार्थकः, अत्र सर्वेषां भीतेर्वर्णनम्, तन्निरसनार्थं सङ्घटनव्यवस्थादीनामवलोकनेन पुरुषसूक्तस्थविराजः पार्थक्यं सहजमेव भवति। अर्थादयं 'विराट्' राजविहीनां स्थितिं विज्ञापयति। 'वा' शब्दः राज्ये स्थितेऽपि राजविहीनां स्थितिं द्रढयति, अर्थादेतस्याः प्राग् राजा नासीत्। तदानीं भीतिरुत्पन्ना किमिदानी भविष्यतीति। पूर्णतः इयमराजकावस्था तु नासीत्। यतो हि किञ्चित्कालपर्यन्तमेव वेनविहीना स्थितिरासीत्। तत्र राज्यकर्तारस्तु अवर्तन्त एव यैः शीघ्रमेव पृथोरुत्पादनं कृतमिति पुराणादिभ्यो विज्ञायते। अत्र वेनानन्तरं समाजस्येदृशः क्रमिकोत्थानस्योल्लेखो लभ्यते, गृहपत्याहवनीयदक्षिणाग्निशब्दैः। अनेन विज्ञायते यदधुना सामाजिकक्रान्तेरुदयोऽपि सञ्जातः। प्रसङ्गेऽस्मिन् मन्त्रस्थ 'उत्क्रान्ति' शब्दोऽपि महत्त्वपूर्णः। अत्रेमानि सङ्घटनानि 'दैवसिद्धान्तं' विहाय 'सामाजिकानुबन्धस्य' तथा च 'राजतन्त्रं' विहाय 'लोकतन्त्रस्य' तथैव 'व्यक्तिसिद्धान्त' विहाय 'सन्तुलितसाम्यवादस्य' किमुत 'भौतिकवादस्य' प्रतीकान्यासन्निति प्रतिभाति। अस्य [2]सङ्घटनत्रयस्यानुशीलनेन विज्ञायते यत् प्रारम्भावस्थायां राज्यराजयोः स्थितावपि जनतायाः व्यवस्थितं सङ्घटनं नासीत्। तदा राज्ये निरङ्कुशता समायाता। अत एव सामाजिकं सङ्घटनमावश्यकं सञ्जातम्।

गार्हपत्यः—अथमर्थो व्यज्यतेऽनया श्रुत्या—

सोदक्रामत्स गार्हपत्ये न्यक्रामत्।
गृहमेधो गृहपतिर्भवति य एवं वेद[3]॥

अत्र गार्हपत्यगृहपतिशब्दाभ्यां विज्ञायते यद् विकासपरम्परायामादौ सुदृढा सामाजिकी संस्था अवस्था वा समुत्पन्ना। पश्चात् तस्याधिकारी सञ्चालको वा समभवत्। तथैव एकं नूतनं तथ्यमपि पुरतः आगच्छति यत् सर्वप्रथमं स्त्रीपुरुषौ प्रेमसौहार्दादिपूर्णमानवोचितभावनया व्यवहरतः स्म। यद्यपि सामान्यजन्तूनामपि मिथुनानि भवन्ति, तथापि तेषु मनुष्यवद् विशिष्टबुद्धिः चिन्तनादीनाञ्चाभावो भवति। अतः सुसंस्कृतेः सङ्घटनकार्ये मनुष्य एव साफल्यमलभत। पशूनां मेलनं तु केवलं वैषयिकं सुखं यापयितुमेव भवति। परं मानवस्तु तत्प्राकृतं सुखमनुभूयापि विशेषतः समाजराष्ट्रयोरुत्तरोत्तरविकासार्थं सर्वत्र शान्त्यर्थं

---

१. अथर्व० १९।६।९। २. गृहपत्यादेः।
३. अथर्व० ८।१० (१)। २–३।

संरक्षणार्थञ्च सुविचारेण कार्यक्रमं सम्पादयति। एतत् सर्वं सम्पादयितुमेव मानवः सर्वप्रथमं 'गृहपति'संस्थायाः स्थापनामकरोत्। अस्यां संस्थायां धर्मनियन्त्रितौ स्त्रीपुरुषौ सायंप्रातरग्न्याराधनानि कुर्वन्तौ मिथः सम्मिल्य तिष्ठतः स्म। एतयोरग्रे परिवारोऽप्यवर्धत। यत्र पिता एव प्रधानशासकत्वेन स्वीक्रियते स्म।[1] अयमेव गृहपतिः शासननियन्त्रणादिगुणैः ग्रामनगरप्रान्तदेशराष्ट्राणाञ्च प्रधानत्वेनोपजीव्यः। राजशास्त्रानुसारेण राज्यस्य राष्ट्रस्य वा इदमेव गृहपतिपदं साम्राज्यस्य सर्वोच्चपदे परिणतमभूत्।

आहवनीयः—गार्हपत्यानन्तरं पुनः—

सोदक्रामत् साहवनीये न्यक्रामत्।
यन्त्यस्य देवा देवहूतिं प्रियो देवानां भवति य एवं वेद[2] ॥

अत्राऽऽहवनीयशब्दस्यापि मन्त्रब्राह्मणसूत्रादिषु विपुलं वर्णनमुपलभ्यते। यदा कदा गृहपतिष्वन्योन्यं वैमत्यं भवति स्म तदा तेषां मतभेदान् दूरीकर्तुं तत्रत्या गृहपतयः समवेताः भवन्ति स्म। तत्र सम्मिल्य वादप्रतिवादाभ्याम् अन्योन्यमाह्वयन्ति स्म। वादविवादानन्तरमेव मतैक्यं भवति स्म। इयमेवाहवनीयावस्था वर्तते[3]। आहवनीयशब्दस्य धात्वर्थोऽपि आह्वानरूपो वर्तते।

दक्षिणाग्निः—इयमाहवनीयावस्थाप्युदक्रामत्। यथा—

सोदक्रामत्सा दक्षिणाग्नौ न्यक्रामत्।
यज्ञर्तो दक्षिणीयो वासतेयो भवति य एवं वेद[4] ॥

इतिमन्त्रानुसारं दक्षिणाग्न्यवस्थाया उत्पत्तिः सञ्जाता। अत्रापि पूर्ववदेव मतभेदस्य प्रश्ने यथावत् स्थिते सति दक्षिणाग्निसंस्थायाः प्रणयनं सञ्जातम्। मन्ये आहवनीयस्य कार्यपूर्त्यर्थं सुयोग्यानां चतुराणां विदुषां सङ्घटनाय कार्यमिदं समर्पितं समाजेन। यतो हि दक्षिणशब्दस्यार्थः—चतुरः योग्यः प्रामाणिकः च भवति। तथैव अग्निशब्दस्य—शुद्धः सत्यवादी, मतिमांश्च वर्तते। अयं दक्षिणाग्निर्गार्हपत्याहवनीययोः श्रेष्ठो ज्येष्ठश्च बभूव। श्रौते एतेषां [5]गार्हपत्यादीनां महत्त्वपूर्णा सामग्री लभ्यते। श्रौतीयाग्न्याधानेऽग्निप्रणयनविधावप्येतेषां गार्हपत्यादीनामन्योन्यः सम्बन्धः सुव्यक्तः। यथा गार्हपत्यादाहवनीयमुद्धृत्य दक्षिणाग्नौ प्रणयनस्य व्यवस्था वर्तते। अर्थाद् गार्हपत्यादावहनीये प्रणयनं भवति पश्चाद् गार्हपत्यादेव दक्षिणाग्नौ। इत्थं गार्हपत्यस्य प्रथमम् आहवनीयस्य द्वितीयम्, दक्षिणाग्नेस्तृतीयमन्तिमं वा स्थानं वक्तुं शक्यते यान् प्राप्य समाजः स्वाभिलषितमलभत। दक्षिणाग्न्यवस्थानन्तरं सोदक्रामत् सा सभायां[6] न्यक्रामत्, इत्यादि।

---

१. अनेन पितृसिद्धान्तः दृढो भवति। २. अथर्व० ८।१०।४–५।
३. प्राचीन भारत में जनतन्त्र, पृ० ४१। ४. अथर्व० ८।१० (१)। ६–७।
५. वैदिककोषे गार्हपत्यादीनवलम्ब्य कृता अर्था द्रष्टव्याः पृ० ४६, १२९, १८६।
६. अस्मिन्निबन्धे सभासमितिप्रकरणे द्रष्टव्यम्।

इत्थमनेन 'विराट्'सूक्तेन सम्भूयक्रान्तेः पद्धतिस्तस्याः फलस्य च सम्यग् बोधो जायते। तथैव त्र्यग्निमिषेण सामाजिकक्रमिकसङ्घटनानामपि परिचयो लभ्यते। अत्र राजशास्त्रे पितृसिद्धान्तस्य शासकीयप्रवृत्तेर्मूलस्य च सङ्केतो वर्तते। सूक्तस्यास्य राजशास्त्रमवलम्ब्य नैकविधं महत्त्वं विज्ञायैव 'राज'शब्दान्तर्गतमत्र स्मरणं कृतम्।

## राज्ञः परिभाषा—

वेदादिभारतीयवाङ्मयेषु इन्द्रवरुणसोमक्षत्रियराजशासकराज्याधिकारि-युवराजराजकृद्राजन्यादिशब्दाः प्रसङ्गानुसारेण मर्त्यदेवलोकयोः शासकीयार्थे पर्यायवाचित्वेन स्वीक्रियन्ते, ये सामान्यतो राजवाचिनः सन्ति। अतः सर्वादौ राजशब्दस्य मूलार्थोऽन्वेषणीयः। राजशब्दः प्रमुखतः प्रजारञ्जकार्थो वर्तते। यथा–राजन् (पु०) 'राज+कनिन्' रञ्जयति रञ्ज कनिन्। एतत् सर्वमवधार्यैव भारतीयराजनीतिपण्डितैरस्यैका सर्वसम्मता दार्शनिकी व्युत्पत्तिरपि प्रदर्शिता वर्तते। ते कथयन्ति'शासकं राजशब्देन एतदर्थं सम्बोधयन्ति, यतो हि स प्रजाया अनुरञ्जनं करोति।' एष एवार्थः समस्तेषु वैदिकेषु साहित्येषु स्वीकृतोऽस्ति। एतदर्थको लैटिनभाषायां रैक्सशब्दो वर्तते। 'दोग्घनिकाये' 'अग्गन्न[1] सुत्तन्ते'ऽपि राजशब्दस्य ईदृशी व्याख्या वर्तते। वेदेषु राष्ट्रा( राज्या )ध्यक्षस्य सर्वसमर्थ-शासकस्य वा प्रजानुरञ्जकत्वादिगुणा वर्ण्यन्ते।

**को राजा भवितुं शक्नोति ?**—पुराकालादेवेदं ज्ञायते यत् समाजे यस्य पराक्रमः प्रभावश्चासीत्, यस्मिंश्च न्यायक्षमता, शत्रुसंहारिणी प्रवृत्तिश्चासीत्। तस्य प्रमुखं कार्यमासीद् देशतः शत्रुनिवारणम्, शान्तिरक्षणयोर्व्यवस्था, प्रजायाः यथायोग्यमन्नवस्त्रावासादिभिः सन्तुष्टिकरणञ्च। सर्वमेतद्यः सम्पादयेत् स एव राजा भवितुं शक्नोति। तं सामान्यप्रजाजना राजकर्तारो वा निर्वाचयन्ति स्म। यथा—'यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न सः यस्मै न[2]।'

## राज्ञः उत्पत्तिः—

राज्ञ उत्पत्तिविषये विदुषां विविधा विचाराः लभ्यन्ते। यथा—१. दैव-सिद्धान्तः, २. पितृपरम्परा ( क्रमः ), ३. विक्रमः, ४. पुनःप्रतिष्ठा, ५. निर्वाचनं च। वेदेषु यथास्थानमेतेषामुदाहरणानि वर्तन्ते। यथा—

(१) **दैवसिद्धान्तः**—अस्य दैवसिद्धान्तोत्पन्नस्य राज्ञ उत्पत्तिविषये उदा-हरणानि वेदेषु ( संहिताग्रन्थेषु ) नैव लभ्यन्ते। तत्र क्वचित् विद्वद्भिरपि तस्य राज्ञ उत्पत्तिर्दैवीति कथितं वर्तते। वैदिकग्रन्थेषु सूत्ररूपेण राज्ञो देवरूपं[3] स्मृति-

---

१. 'दम्मेन परे रञ्जेतीति' २।१।३। २. श० ब्रा० ९।३।२।५।

३. प्राचीन भारत में राज्य और न्यायपालिका, पृ० १३५।

कालं यावत् स्वस्य समग्रप्रकारेणाभिव्यक्तमासीदिति। अत्र 'विराडग्रे समभवत्[१]' 'अहं रुद्रेभिर्वसुभिश्चरामि[२]' इत्यादिप्रमाणैः प्रयत्नपूर्वकमिदं वक्तुं शक्यते यद् वेदेषु प्रारम्भतः राज्ञः दैव्युत्पत्तेः सङ्केतो लभ्यते, परमधिकानि प्रबलानि विस्तृतानि च प्रमाणानि सामाजिकानुबन्धेन निर्वाचनस्यैवोपलभ्यन्ते। ऋग्वेदे केवलमेकत्रैव राज्ञः पुरुकुत्सस्यार्धदेव इति विशेषणं प्रयुक्तमस्ति। यथा—

पुरुकुत्सानी हि वामदाशद्धव्येभिरिन्द्रावरुणा नमोभिः।
अथा राजानं त्रसदस्युमस्या वृत्रहणं ददथुरर्धदेवम्[३]॥'

अथर्ववेदेऽपि— 'राज्ञो विश्वजनीनस्य यो देवोऽमर्त्यां अति।
वैश्वनरस्य सुष्टुतिमा सुनोता परिक्षितः[४]॥

अत्र केवलमेकवारम् औत्तरकालिके सूक्ते एव राज्ञः परीक्षितः मर्त्येषु देवरूपः कथितः। एभिः प्रमाणैरिदं नैव सिद्धयति यत् तस्मिन् देवत्वस्यैव भावना मान्यासीत्।

दैवसिद्धान्तस्य प्रतिपादनावसरे इदमपि न विस्मर्तव्यं यद् वेदेषु सर्वस्याधारः यद् ऋतं वर्तते तद् दैवरूपं वर्तते। तत्पश्चात् सामाजिकानुबन्धेनैवोत्पत्तिरिति वादः। दैवसिान्तस्य समर्थनं वैदिकसंहितोत्तरवर्तिब्राह्मणपुराणादिग्रन्थैरेव भवति। स्वयं कौटिल्योऽपि सामाजिकानुबन्धस्य मनोनयनस्य वा समर्थकोऽस्ति[५]।

(२) पैतृकसिद्धान्तः—वेदेषु दशपुरुषाणामुल्लेखो वर्तते, तथैव युवराज-राजपुत्रशब्दाभ्यामपि पारम्परिकक्रमस्य प्रतिपादनं भवति[६]। ऋग्वेदे तु स्पष्टतः आनुवंशिकं राजपदं दृश्यते। यथा—तृत्सवः चतुरः पुरुषान् यावदासन्। सृञ्जयानां राज्ञो दुष्टरीतुर्हं पौंसायनस्य कथायां दशपुरुषान् यावदुल्लेखः[७]। इत्थं राजपदं पैतृकमपि श्रूयते।

(३) विक्रमः—प्रायो बहुचर्चितं वर्तते यदार्याः विक्रमशीला आसन्। वेदेष्वनार्यैः सहार्याणां बहूनि युद्धानि प्रसिद्धानि सन्ति[८]।

(४) पुनःप्रतिष्ठा—निरङ्कुशत्वात्, अन्यायित्वात् अयोग्यत्वात्, परा-

---

१. अथर्व० १९।६।९। २. तत्रैव ४।३०।

३. ऋ० ४।४२।९, विशेषद्र० प्राचीन भारतीय शासनपद्धति, पृ० ६४।

४. अथर्व० २०।१२७।७, ऐ० ब्रा० प० ८।ख० २, एष वै प्रजापतेः प्रत्यक्षतमां यद्राजन्यः। तस्मादेकः सन् बहूनामीष्टे।' श० ब्रा० ५।१।५।१४ इति।

५. मात्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं चक्रिरे–अर्थशा० १।१२।

६. वैदिककोषे—'राजशक्तेः स्वरूपम्' पृ० ४४०।

७. श० ब्रा० १२।४।५।१–१३। वि० द्र० प्राचीन चरित्रकोशस्य ऋगाद्युदाहरणानि।

८. अस्य निबन्धस्य 'पुरप्रकरणम्' द्रष्टव्यम्।

जितत्वात्, विरक्तत्वाद्वा शासकस्य राज्यच्युतिः भवितुं शक्नोति। पुराऽपि दुष्टतुंदीर्घश्रवस-सिन्धुसितादयो राजानः सिंहासनान्निष्कासिताः। यथा—

**'यदा वज्रं हिरण्यमिदथा रथं हरी यमस्य वहतो वि सूरिभिः।**
**आ तिष्ठति मघवा सनश्रुत इन्द्रो वाजस्य दीर्घश्रवसस्पतिः'[1] ॥'**

यदा कदा येन केनापि प्रकारेण राजविहीनं राज्यं दृष्ट्वा मन्त्रिणः मित्राणि राजपरिवारस्थाः प्रजाजनाः वा परराष्ट्रे 'अपरुद्धम्'[2] शत्रुभिर्निरुद्धं चरन्तं राजानं परराष्ट्रादन्विष्य पुनः सर्वसम्मत्या राजपदे प्रतिष्ठापयन्ति स्म। इयं स्थितिः वैराज्यानन्तरस्थाराजकव्यवस्थायाः वर्तते। अत्र वैन्यस्योदाहरणं पर्याप्तं वर्तते।

(५) **निर्वाचनम्**—वैदिकराजनीतेः लोकतन्त्रस्य दृष्टया निर्वाचनमेको महत्त्वपूर्णो विषयो वर्तते। अनया निर्वाचनपद्धत्या वैदिकजनानामुच्चविचाराणां तेषां राजनैतिकसामाजिकोच्चतरस्थितेश्च सहजमेवानुमानं जायते। तैः केवलं दैवी उत्पत्तिः इति सिद्धान्तस्य पितृमूलकसिद्धान्तस्य वा आश्रयो नैव कृतः। तैः सर्वसम्मतायाः स्वस्थायाः सर्वसुलभायाश्च पद्धत्या विकासः कृतः। अनन्तरमियमेव पद्धतिः सर्वत्र प्रसृता। निर्वाचनेऽपि वैदिकानां बहवः सुयोग्याः प्रयोगाः दृश्यन्ते। 'विराड्वा इदमग्र आसीत्'[3] इति सूक्ते तथैवान्यस्थलेष्वपि निर्वाचितस्य राज्ञः कृते विविधानां [4]सभासमित्यादिवैधानिकसङ्घटनसंस्थानामनुमतेः ताभिः मन्त्रणादीनां तथैव वृतस्य राज्ञः प्रजां प्रति प्रतिज्ञावचनानां च सङ्केतो लभ्यते। यथा—

**ता अस्य ज्येष्ठमिन्द्रियं सचन्ते ता ईमा क्षेति स्वधया मदन्तीः।**
**ता ईं विशो न राजानं वृणाना बीभत्सुवो अप वृत्रादतिष्ठन्[5] ॥**

उपर्युक्तमन्त्रानुसारेण सामान्यजनता एव राजानं विचिनोति स्म। वेदेषु चयनार्थं 'वृञ्-चिञ्'इत्यादिधातूनां प्रयोगा लभ्यन्ते। क्वचिदाह्वानार्थको 'ह्वेञ्' धातुरप्युपर्युक्तार्थे सङ्गच्छते। अस्यां संस्थायां राज्ञः वरणपद्धतेरनुसरणं दैवतं प्रतिभाति। यथा—

**शकधूमं नक्षत्राणि यद्राजानमकुर्वत।**
**भद्राहमस्मै प्रायच्छन्निदं राष्ट्रमसादिति[6]॥**

मन्त्रस्यास्य अनेके अर्था विद्वद्भिः कृता वर्तन्ते। यथा—'शकस्य शकृतः सम्बन्धी धूमो यस्मिन्नग्नौ स शकधूमः अग्निः। तदभेदाद् ब्राह्मणोऽत्र अभिधीयते— 'एष वा अग्निर्वैश्वानरो यद् ब्राह्मणः' (तै० ५.२.८.२)। तं शकधूमं ब्राह्मणं पुरा

१. अथर्व० २०।७३।४। २. अथर्व० ३।३।४।
३. तत्रैव ८।१०।
४. द्र० अस्य निबन्धस्य सभासमितिप्रकरणम्।
५. ऋ० १०।१२४।८ तथैवास्य मण्डलस्य १७२ तमं सूक्तमपि द्र०।
६. अथर्व० ६।१२८।१।

नक्षत्राणि तारकाः राजानं चन्द्रमसम् अकुर्वत व्यदधतेति यत् तस्य कारणम् उच्यते। अस्मै शकधूमाय भद्राहं पुण्याहं कल्याणप्रदं कालं प्रायच्छन्। भद्रं च तद् अहश्चेति भद्राहः। किमर्थं प्रायच्छन्। तत्राह—इदं राष्ट्रं राज्यं नक्षत्रमण्डलाधिपत्यम् असात् भवेत्। अस्य वशे सर्वं वर्तेत इति अनेनाभिप्रायेणेत्यर्थः[1]'। अत्र सायणाचार्यानुसारेण शकधूमोब्राह्मणवाचकस्तथैव राज्ञो वरणस्यपि भावो ध्वन्यत एव। एतादृश एवान्येषामपि विचाराः। यथा—'शकधूमः[2] शुभाशुभसूचकः मानवो वान्यः कश्चित्। तथैव शकधूम इत्यस्य विशेषाशयः—यः ज्वलतः गोमयस्य धूममवलोक्य ऋतु (काल) भविष्यत्फलं कथयति तं नक्षत्राणि राजानमकुर्वन्। तथैवास्मै भद्रऋतुं प्रायच्छन्' इति। अत्र विविधेषु विचारकेषु सातवलेकरस्य[3] मतं किञ्चित् स्पष्टं प्रतिभाति। एतेषां विचारेण सूक्तमिदं पूर्णतः राज्ञो वरणात्मकः स्वोन्नत्यर्थं सर्वसामान्या जनाः सुयोग्यं पुरुषमादौ राजानमकुर्वन्। न क्षत्राणि क्षत्रियजातिव्यतिरिक्ताः ब्राह्मणवैश्यशूद्रादिप्रजाः। तथैव शकः समर्थः इत्यादिशब्दार्था विशेषेण विचारणीयाः।

एवमेव राज्ञः निर्वाचनस्य पुनर्निर्वाचनस्य च सुपुष्टानि प्रमाणानि अथर्ववेदे लभ्यन्ते यत्र निर्वाचितस्य नृशासकस्याधिकारकर्तव्ययोः राष्ट्रराज्ययोर्भेदस्य सङ्केतश्च वर्तते। यथा—

आ त्वा गन्राष्ट्रं सह वर्चसोदिहि प्राङ्विशां पतिरेकराट् त्वं वि राज।
सर्वास्त्वा राजन्प्रदिशो ह्वयन्तूपसद्यो नमस्यो भवेह[4]॥

तत्र 'राष्ट्र' शब्दस्य सायणाचार्येण प्रायः 'राज्य' इत्यर्थः कृतोऽस्ति। वेदे क्वचिदनयोर्भेदो दृश्यते। अस्य मन्त्रस्य व्याख्यानेऽपि यथा—'हेराजन् त्वा त्वां राष्ट्रं शत्रुभिराक्रान्तं स्वकीयं राज्यम् आ गन् पुनरागमत[5]॥' परमत्रायमर्थो विशेषेणानुकूलः प्रतिभाति। यथा—हे राजन् त्वयेदं राष्ट्रं लब्धम्। अतस्त्वमिदं लब्ध्वा वर्चसा बलेन एकराट् एकमात्रशासकः सन् सुशोभ, इदं राष्ट्रं लब्ध्वा सुयोग्यं राज्यं शासनं च निर्माय प्रजां शाधि। अयममिप्रायः। अनेन ध्वन्यते यदेतत् प्राग्राष्ट्रमासीत्। अत्र राष्ट्रं राज्यात्पृथगवबुध्यते। तथैवाग्निमैर्वाक्यैः संवरणस्य सुस्पष्टार्थोऽत्रगम्यते। यथा—'सर्वास्त्वा राजन्प्रदिशो ह्वयन्तु', 'त्वां विशो वृणतां राज्याय', 'त्वामिमाः प्रदिशः पञ्चदेवीः', 'अच्छ त्वा यन्तु हविनः', 'अश्विना त्वाग्रे मित्रावरुणोभा विश्वे देवा मरुतस्त्वा ह्वयन्तु', 'तदयं राजा वरुणस्तथाह स त्वायमह्वत्स उपेदमेहि', 'स त्वाय मह्वत्स्वे सधस्थे', 'तास्त्वा सर्वाः संविदाना ह्वयन्तु दशमीमुग्रः सुमना वशेह[6]' इति। अपि च—

---

१. अथर्ववेदसायणभाष्यम् पृ० ८४७। २. अथर्ववेद एवं गोपथब्राह्मण पृ० १६७–६८।
३. अथर्ववेद–मातृभूमि और स्वराज्यशासन पृ० ७६।
४. अथर्व० ३।४।१। ५. अथर्व० भा० पृ० २८८।
६. उपर्युक्तसूक्तस्यैव विविधानि वाक्यानि।

**अचिक्रदत्स्वपा इह भुवदग्ने व्यचस्व रोदसी उरूची।**
**युञ्जन्तु त्वा मरुतो विश्ववेदस आमुं नय नमसा रातहव्यम्[1] ॥'**

अचिक्रदत् कदि क्रदि क्लदि आह्वाने रोदने च। अमुम् उक्तलक्षणं राजानम् आनय स्वराष्ट्रं प्रापय। अस्य सहाया विश्ववेदसः मरुतो भवन्तु।

तथैव—'दूरे चित् सन्तमरुषास इन्द्रमा च्यावयन्तु सख्याय विप्रम्[2]।':दूरे स्थितमपि मेधाविनं साहाय्याचरणायागमयन्तु। अपि चाग्रे—'अद्भ्यस्त्वा राजा वरुणो ह्वयतु', 'सोमस्त्वा पर्वतेभ्यः ह्वयतु', 'इन्द्रस्त्वा विड्भ्यः ह्वयतु', 'ह्वयन्तु त्वा प्रतिजनाः प्रतिमित्राः[3]' इत्यादिना राज्ञः संवरणस्य स्पष्टोल्लेखो वर्तते। तथैव तत्र वरुण-सोमेन्द्रशब्दैः समुद्रपर्वतदेशान्तराणां सङ्केतोऽवबोधयति यद् राज्यभ्रष्टस्य त्रीण्येव स्थानानि भवन्ति। अथवा त्रिष्वेषु स्थानविशेषेषु राज्यानि भवन्ति, यत्र गत्वा पदच्युतोऽथवा येन केनापि प्रकारेण स्थानच्युतो राजा तत्र-तत्र शरणं गच्छति। तथैवास्य निर्वाचनं न केवलं देवाः सामान्यजना वा प्रत्युत सजातः समानबलश्चापि विदधाति। तथैव राज्ञः भावि राज्यनिर्माणं तस्य सञ्चालनार्थं च सहयोगिनां साहाय्येन कार्यकरणस्य तस्य योग्यतायाश्चाप्युल्लेखो लभ्यते।

वाजसनेय्यां संहितायामपि निर्वाचनस्योल्लेखो वर्तते यथा—

**'सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त मान्दा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त वाशा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त शविष्ठा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शविष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त शक्वरी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्वरी स्थ राष्ट्रदा राष्ट्रममुष्मैं दत्त जनभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्व-भृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापः स्वराज स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त। मधुमतीर्मधुमतीभिः पृच्यन्तां महि क्षत्रं क्षत्रियाय वन्वाना अनाधृष्टाः सीदत्त सहौजसो महि क्षत्रं क्षत्रियाय दधतीः[4] ॥**

यत्र निर्वाचनप्रसङ्गे प्रजां प्रति विशिष्टं सम्बोधनं लभ्यते यतो हि प्रजा एव राष्ट्रे सुयोग्याय राज्ञेऽधिकारप्रदात्री वर्तते। अधुनाऽपि निर्वाचनावसरे नेतारः प्रजां सम्बोधयन्ति।

---

१. अथर्व० ३।३।१।    २. अथर्व० ३।३।२।
३. उपर्युक्तसूक्तस्य ३—५ मन्त्रवाक्यानि।
४. यजु० १०।४।

ब्राह्मणग्रन्थेषु[१] नियमेऽस्मिन् किञ्चित् परिवर्तनं दृश्यते । तत्र सामान्य-जनापेक्षया निर्वाचनस्य विशेषाधिकारः राजगणस्यानुमत्या सम्पद्यते स्म । यथार्थतः संहिताग्रन्थेस्य एवेदं विकसितोदाहरणं लभ्यते । यथा—'हृविनः सजाताः[२]' । प्रारम्भकाले तु सामान्यतः प्रजा एव निर्वाचनं करोति स्म ।

**राज्याभिषेकः—**

वैदिकराजनीतौ राज्ञो राज्याधिकारसम्प्राप्त्यर्थं विधिसम्मतोऽभिषेक आवश्यक आसीत् । यद्यपि मनोनयनस्य निर्वाचनस्य वा सामाजिको विधिः पूर्वं सम्पद्यते स्म परं राज्ञः निर्वाचितस्य देवप्रदत्ताधिकारसम्पन्नस्यापि धार्मिकोऽयं विधिः यावन्न भवेत् तावत् सः पूर्णरूपेण राज्याधिकारी न भवति स्म । अस्याभिषेकस्य वर्णनं संहितासु लभ्यते । ब्राह्मणग्रन्थेषु त्वस्य सम्पूर्णविधानं तदनुषङ्गेण राज्ञोऽधिकारकर्त्तव्ये च विस्तरेणोल्लिखितानि सन्ति ।

**अभिषेकस्य सूचना**—अयं विधिर्गोपनीयो नास्ति । अयं घोषणापूर्वकं सम्पद्यते स्म । अनेन सिद्धयति यदस्मिन् कर्मणि सम्पूर्णसमाजस्य ( मर्त्यदेवलोकयोः ) साम्मत्यमभवत् । अस्य तात्पर्यं वर्तते यदस्य राज्ञः राज्यपदारोहणे कस्यचिद् विरोधः सन्देहो वा भवेच्चेत् सः तस्य विरोधमपि कर्तुं शक्नोति । वेदादेव राजपदस्वीकरणे प्रजाया अनुकूलतायाः पुष्टप्रमाणान्युपलभ्यन्ते । शुक्लयजुर्वेदस्य दशमाध्यायस्य नवममन्त्रस्याधारेण शतपथब्राह्मणस्येमे विधिव्याख्ये निर्मिते । यथा—

**आविर्मर्या आवितो अग्निर्गृहपतिराविक्त इन्द्रो वृद्धश्रवा आवित्तौ मित्रावरुणौ धृतव्रतावावित्तः पूषा विश्ववेदा आवित्ते द्यावातथिवी विश्वशम्भुवावावित्तादितिरुरुशर्मा[३]** ।

इयं घोषणाग्नीन्द्रमित्रावरुणपूषाकाशपृथिव्यदितीः प्रति वर्तते । अत्राङ्किता अग्न्यादयो विशेषार्थका वर्तन्ते । एषामभिप्रायो ब्राह्मणक्षत्रियव्रतपतिप्राणोदानवायुपशुभूमातृभिः सह वर्तते । इत्थं देवजगतो देवान् इयं घोषणा सूचयति । अस्या अनुमोदनमपि यजुर्वेद एव लभ्यते[४] । अत्राभिषेकसमये पुरोहिता अग्नीन्द्रपूषादिदैवतसम्बन्धेनाभिषेचनीये राजन्यपि देवत्वं कल्पयन्ति, यद्यप्ययं निर्वाचित आसीत्[५] । यथा युद्धे विजेतारं राजानम् 'इन्द्र' इत्युपाधिनाऽलङ्कुर्वन्ति[६] स्म ।

---

१ 'यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति । न सः यस्मै न' । श० ब्रा० ९।३।२।५ ।

२. अथर्व० ३।४।३ ।

३. यजु० १०।९, विशेषद्र० हिन्दू राज्यशास्त्र पृ० १०५ ।

४. हिन्दू राज्य शास्त्र पृ० १०६ ।

५. श० ब्रा० ५.२.१.१४,—ऐ० ब्रा० पं० १, खं० १३ ।

६. ऐ० ब्रा० पं० ८। अ० २ । चतुर्थाध्यायेऽपि ।

तत्र बहूनामुपकरणानामुपयोगो भवति स्म यत्र जलस्य विशिष्टं महत्त्वं सूच्यते। सरस्वत्याः समुद्राणां च विभिन्नैर्जलैर्दुग्धदधिमधुघृतैश्च राजानोऽभिषिच्यन्ते स्म। एवञ्च सप्तदशानाम् अपां प्रयोगो भवति स्म। अत्र प्रतिजलं विशिष्टं तात्पर्यमासीत्। अत्र ब्राह्मणादिवर्णानुसारेण पलाशोदुम्बरन्यग्रोधादिपत्राणां प्रयोगोऽपि भवति स्म। अनन्तरं राजा वस्त्रं परिदधाति स्म। यथा—

क्षत्रस्योल्बमसि क्षत्रस्य जराय्वसि क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसीन्द्रस्य वार्त्रघ्नमसि मित्रस्यासि वरुणस्यासि त्वयायं वृत्रं वधेत्। दृवासि रुजासि क्षुमासि। पातैनं प्राञ्चं प्रत्यञ्चं पातैनं तिर्यञ्चं दिग्भ्यः पात[1]।

अभिषेकमन्त्राः—तत्राभिषेकसमये पुरोहिता ऋगाद्यध्येतारो ब्राह्मणाश्च यान् मन्त्रान् पठन्ति स्म ते राज्ञः कर्त्तव्यसूचका आसन्। यथा—

भूतो भूतेषु पय आ दधाति स भूतानामधिपतिर्बभूव।
तस्य मृत्युश्चरति राजसूयं स राजा राज्यमनुमन्यतामिदम्[2] ॥ इत्यादि।

अस्मिन् सूक्तेऽपि विविधानां जलानां सङ्केतो वर्तते। अत्र समुद्रजलस्य तात्पर्यं वर्तते। हे राजन्! तव व्यापारादिविस्तारः समुद्रं यावद् भवेत्। अयं सप्तममन्त्रस्य भावः। अस्य पञ्चमस्य 'तासां सर्वासाम् अपां त्वा वर्चसाम् अभिषिञ्चामि' मन्त्रस्य तात्पर्यं वर्तते त्वमपि आभिः समानो भव। तथैव यः 'पयः आदधाति' दुग्धादीन्युपभोग्यवस्तूनि प्रजाजनेभ्यः ददाति 'सः भूतानामधिपतिर्बभूव' एव। एवम् अधिपतिः सर्वश्रेष्ठाधिकारी भवति। ईदृशोऽस्य राज्ञः सहायकः मृत्युर्भवति। राजा शत्रुनाशकः मित्रवर्धकस्तथा वीर्यवान् भवेत्। राजा व्याघ्रो वैयाघ्र इव पराक्रमी भवेत्। विश्वरूपः स्वरोचिश्च भवेत् इत्यादि।

राजस्थैर्यकामना—तत्र 'आ त्वाहार्षम्' 'ध्रुवा द्यौः' इति सूक्तद्वयेन[3] राज्ञः सुस्थैर्यस्य वर्णनं वर्तते। अत्र राज्ञः कृते तथा उपदेशाः सन्ति यथा राज्ञः निर्वाचनं समस्तप्रजया भवेत्, राज्ञः सुशासनेन जनाः सुप्रसन्नाः स्युः स्वोन्नतिं च वर्धयेयुः। राजा अचञ्चलः सन् प्रजामाकर्षयेत्, राष्ट्रविदुषां निर्देशनेन च राज्यं सञ्चालयेदिति। उपर्युक्तोपदेशविरुद्धः सन् राजा विनश्यति। तथैव—अयं राजा मन्त्रस्थद्युपृथिवीपर्वतादिवद् गुणसम्पन्नः स्थिरश्च भवेत्। बृहस्पतिरिन्द्रो वरुणश्चास्य साहाय्यं कुर्युः।

अभिषेके राजपुरोहितयोः संवादः—अभिषेकसमये पुरोहितः राजानं सम्बोधयति। यथा—

क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसि।
मा त्वा हिंसीन्मा मा हिंसीः॥
निषसाद धृतव्रतो वरुणः पस्त्यास्वा।
साम्राज्याय सुक्रतुः। मृत्योः पाहि विद्योत्पाहि॥

---

१. यजु० १०।८। २. अथर्व० ४।८।१–७।
३. अथर्व० ६।८७।१–३, ८८।१–३।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि ॥

कोऽसि कतमोऽसि कस्मै त्वा काय त्वा ।
सुश्लोक सुमङ्गल सत्यराजन्[1] ॥

हे वीर्यकेन्द्र ! त्वा कोऽपि न हिंसेत्, त्वमपि अस्माकं हिंसां मा कुरु । नियमितः अरिष्टनिवारकः सन् प्रजायां सुस्थिरो भव । सर्वकष्टनिवारणार्थम्, देवतानामुपयोगार्थम्, लाभार्थञ्चाहं त्वामभिषिञ्चामि । प्रजायाः सर्वमङ्गलार्थमहं त्वामभिषिञ्चामि । एतदनन्तरं राजा कथयति । यथा--

शिरो मे श्रीर्यशो मुखं त्विषिः केशाश्च श्मश्रूणि ।
राजा मे प्राणो अमृतं सम्राट् चक्षुर्विराट् श्रोत्रम् ॥
जिह्वा मे भद्रं वाङ्महो मनो मन्युः स्वराड्भामः ।
मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सहः ॥
बाहू मे बलमिन्द्रियं हस्तौ मे कर्म वीर्यम् ।
आत्मा क्षत्रमुरो मम ॥
पृष्ठीर्मे राष्ट्रमुदरमंसौ ग्रीवाश्च श्रोणी ।
ऊरू अरत्नी जानुनी विशो मेऽङ्गानि सर्वतः[2] ॥

प्रजायाः शोभा मम मस्तकम्, यशः मुखम्, तेजः केशश्मश्रूणि च वर्तन्ते, इत्यादि । अत्र राष्ट्राध्यक्षस्य राष्ट्रपते राज्ञो वा कर्त्तव्यसूचकं कीदृशं भावयुक्तं सुन्दरं च रूपकं वर्तते । अपि च--'यां च रात्रिमजायेऽहं यां च प्रेतास्मि तदुभयमन्तरेण इष्टापूर्तं मे लोकं सुकृतमायुः प्रजां वृञ्जीथा यदि ते द्रुह्येयमिति[3] ।' इयमपि भयानका गभीरा च प्रतिज्ञा जनतन्त्रसम्बद्धस्य राज्ञः महत्त्वं प्रतिपादयति ।

## राज्यम्—

तत्र वेदेषु राज्यविषयकसामग्रचन्वेषणकार्ये यद्यपि वर्तमानपद्धत्यनुसारेण पृथक् पृथक् राज्यस्योत्पत्त्याधाराङ्गोद्देश्य-परिभाषाप्रकाराद्युपविषयाणां सुस्पष्टं, विपुलं सुसम्बद्धं च वर्णनं नैव लभ्यते तथाप्येतेषां सूत्ररूपेण निदर्शनं त्ववश्यमेव यत्र तत्र विकीर्णमुपलभ्यते । प्रकरणेऽस्मिन् अयमेव विषयो विविच्यते । तत्रादौ सौकर्यार्थमाधुनिकानां प्राच्यप्रतीच्यानाञ्च विचारा उपस्थाप्यन्ते, अनन्तरं तेषां कथनस्य मूलं पुष्टिश्च वेदेष्वन्विष्यते ।

राज्यस्य परिभाषा--कस्मिंश्चिद्देशे देशभूभागे वा प्रभुत्वं तत्रस्थनिवासि-

---

१. यजु० २०।१-४ । २. यजु० २०।५-८, अपि च तत्रैव ९-१० ।
३. ऐ० ब्रा० पं० ८। खं० ।१५ ।

नामुपरि शासनं वा राज्यं कथ्यते । राज्यमूलं परम्परा विक्रमश्च वर्तते[1] । अथर्ववेदे तथा परवर्तिसाहित्ये च सार्वभौमसत्तायाः कृते राज्यशब्दः प्राप्यते[2] ।

[3]आधुनिक मतानि—'राज्यं बहुसंख्यकामानवैरधिकृतः एकः भूप्रदेशो भवति यस्मिन् बहुमतस्येच्छाया अथवा बहुमतस्य बलात् केषाञ्चिज्जनानां निश्चितवर्गस्येच्छायाः प्राधान्यं तेषु जनेषु भवति, ये तेषामिच्छायाः विरोधं कुर्वन्ति ।' ( हालैण्डः )

'राज्यं, स समाजो वर्तते यस्य एकस्मिन् निश्चिते भूभागे स्थाय्यधिकारो भवेद् यः सामान्यविधिना व्यसनेन व्यवहारेण च एकस्मिन् राजनीतिके सूत्रे सुनिबद्धः स्यात्, य एकेन सङ्घटितेन शासनेन स्वतन्त्रतायाः सम्प्रभुताया उपभोगं कुर्वन् आस्ते, यस्य नियन्त्रणं स्वस्य सीमान्तर्गतासु समस्तासु व्यक्तिषु भवेत्, तथात्र यो युद्धं प्रारब्धुं, शान्तिं स्थापयितुं, संसारस्य समस्तसमुदायैः समस्तप्रकारेणान्ताराष्ट्रियसम्बन्धं निर्मातुं च समर्थो भवेत् ।' ( फिलिमोरः )

'एकस्मिन् निश्चिते भूभागे विधेः कृते सङ्घटितो जनसमुदायो राज्यं कथ्यते ।' ( विल्सनः )

राजनीतिशास्त्रेण सार्वजनिकविधेरनुसारेण च राज्यमीदृशानां जनानां समुदायोऽस्ति यः साधारणतया बृहत्सङ्ख्यासु भवेत्, यस्य एकस्मिन् निश्चिते भूप्रदेशे स्थाय्यधिकारो भवेत् । यो बाह्यनियन्त्रणात् स्वतन्त्रः अथवा प्रायः स्वतन्त्रो भवेत्, तथा च यस्यैकं सुसङ्घटितं शासनं भवेत्, यस्य च आज्ञायाः पालनमधिकांशतो जनाः स्वभावतः कुर्युः ।' ( गार्नरः )

'राज्यमेकः सङ्घो वर्तते, यो विधेः साहाय्येन ईदृशे समाजे पूर्णां बाह्यां व्यवस्थां संस्थापयति, यस्य निवासिन एकस्मिन् निश्चिते भूखण्डे तिष्ठेयुः, तथा च यस्य विधानमीदृशेन शासनेन प्रवर्तमानं स्यात्, यस्य तादृशं विधानं हठात् कारयितुं शक्तिः स्यात् ।' ( मैक आईवरः )

'राज्यमेकः क्षेत्रीयः समाजो वर्तते, यः शासने प्रजायाञ्च विभक्तो भवेत्, तथा च स्वस्य निश्चितभूप्रदेशान्तर्गतास्वन्यसमस्तासु संस्थासूपरि भवेत् ।' अयमेव स्वस्य द्वितीये पुस्तके लिखति—'राज्यमीदृशं सङ्घटनं वर्तते यत् सामाजिककल्याणार्थं शक्तेरुपयोगं करोति ।' ( लास्की )

'राज्यमेकं विशिष्टं प्रमुखं च संस्थानं वर्तते, यस्य प्रमुखोद्देश्यं विधेः व्यवस्थायाः अनिवार्ययोजनायाः स्थापनम्, तथा च या निर्धारितैः निश्चितैश्च

---

१. हिन्दूराज्यशास्त्र पृ० ३५ । २. वैदिककोश पृ० ४४५ ।

३. डा० आशीर्वादम् प्रणीतस्य राजनीतिशास्त्रस्य २६–२८ पृष्ठेषु यत्र प्रायो बहूनां प्राचीनयवनानामाधुनिकानां पाश्चात्यविदुषां च मतानि सङ्कलितानि तेषु मुख्यानि पुरःस्थाप्यन्ते, एतेषामत्र प्रमाणानि स्वीकृतानि सन्ति ।

अधिकारिभिः प्रवर्तमानास्ति, या च विधेः साहाय्येन कार्यं करोति ।' ( अर्नेष्ट वार्करः )

अपि च—'समाजस्य प्रवुद्धानां सङ्कटकानां प्रयासेन मानवस्य प्रयोजनपूरणार्थं राज्यं समुत्पन्नम्, यच्च मानवीया संस्था वर्तते । राज्यस्य विकासः सामाजिकेन विकासेन परम्परया च सञ्जातः । राज्यस्य सम्प्रभुता सर्वस्वतन्त्ररूपेण तिष्ठति । राज्यस्य कार्यान्वयनस्य सार्वभौमतां स्वीकृत्य तस्य विधिनिर्मातृत्वं विहाय विधेः संरक्षकत्वं स्वीकृतम्[1] ।'

## राज्ये वैदिकविमर्शः—

उपर्युक्तैर्विभिन्नैर्मतैरिदमेवावगम्यते यद् राज्यं मानवस्योत्थानविकासार्थमावश्यकं भवति, उत्तमराज्यस्य जना उत्तमा भवन्ति । इदं समस्तासु सामाजिकसंस्थासु महत्त्वपूर्णं व्यापकं शक्तिशालि च वर्तते । राज्यं मानवानामीदृशः सङ्घटितः समुदायो वर्तते, य एकस्यैव शासनस्याधीने तिष्ठति । तथा च य एकस्मिन् निश्चिते भूप्रदेशे भवेत् । एतेषां विचाराणां विरोधो वेदे नास्ति । वेदस्यापीदमेव तात्पर्यं वर्तते । यथा—

"...विशां पतिरेकराट् त्वं वि राज ।
सर्वास्त्वा राजन्प्रदिशो ह्वयन्तूपसद्यः...[2] ॥

मन्त्रेऽस्मिन् राष्ट्रस्य एकराड् इति पदेन एकस्यैव शासनाधिकारस्य महत्त्वं सूच्यते, तथैव मन्त्रस्थ 'सर्वास्त्वा प्रदिशः' पदैः भूप्रदेशस्य सीमायाः सङ्केतो लभ्यते । ईदृशेषु सूक्तेषु जनप्रतिनिधिभिः सुयोग्यैर्नेतृभिश्च सम्भूय विचारविनिमयपूर्वकं विहिता निर्वाचनादयो दृश्यन्ते । सूक्तस्य द्वितीये मन्त्रे राज्यराष्ट्रयोः प्रयोगः समानार्थकत्वेन वर्तते । यथा—

त्वां विशो वृणतां राज्याय त्वामिमाः प्रदिशः पञ्च देवीः ।
वर्ष्मन्राष्ट्रस्य ककुदि श्रयस्व ततो न उग्रो विभजा वसूनि ॥

सूक्तेऽस्मिन् एकं वैशिष्ट वर्तते, यदत्र राज्यस्य कृते एव राज्ञः निर्वाचनम् । अत्र येन केनापि प्रकारेण राज्यस्य संरक्षणं भवेद् इत्येव प्रधानं लक्ष्यं वर्तते, येन राज्यस्य प्रभुशक्तिः सर्वोपरि स्थिरा स्यात् । राज्यस्य स्थैर्यार्थं कामनापि अस्यैव महत्त्वं प्रतिपादयति । यथा—

अस्मै क्षत्रमग्नीषोमावस्मै धारयतं रयिम् ।
इमं राष्ट्रस्याभीवर्गे कृणुतं युज उत्तरम्[3] ॥

राज्यस्य महत्त्वं राज्ञोऽप्यधिकं वर्तते, यतो हि स्वयं राजा राज्यस्यानुमत्या व्यवहरेदित्युक्तम् । यथा—

---

१. प्राचीन भारत में राज्य और न्यायपालिका पृ० १–२ ।
२. अथर्व० ३।४।१ । ३. अथर्व० ६।५४।२ ।

भूतो भूतेषु पय आदधाति स भूतानामधिपतिर्बभूव ।
तस्य मृत्युश्चरति राजसूयं स राजा राज्यमनुमन्यतामिदम्[1] ॥

राज्यस्य भूम्या सह सम्बन्धः, महत्त्वं चानेन मन्त्रेण व्यज्यते । यथा—

सा नो भूमिस्त्विषिं बलं राष्ट्रे दधातूत्तमे[2] ।

अस्मिन् भूमिसूक्ते बहवः शब्दा अस्य महत्त्वसूचका वर्तन्ते ।

राज्यस्य क्रमविक्रमयोर्विषये द्वयोरेव उदाहरणानि वेदेषु लभ्यन्ते । अथर्ववेदे यद् 'अपरुद्ध' पदस्य वर्णनं वर्तते तत्त क्रममूलकं प्रतिभाति तथा च यत्र शौर्येण शत्रून् विजित्य राज्यं लब्धं तद् विक्रममूलकं वक्तुं शक्यते । वस्तुतः सर्वमिदं निरूपणं सम्मिश्रितमिवावगम्यते ।

## राज्योत्पत्तिः—

राज्योत्पत्तिविषयेऽपि प्रथमं वेदोत्तरवर्तिनां विचाराः पुरः स्थाप्यन्ते । राज्यस्य प्रागैतिहासिकोत्पत्तेः सम्बन्धे इतिहासस्य राजनीतिशास्त्रस्य च लेखकैरधोलिखितानां सिद्धान्तानां प्रतिपादनं कृतमस्ति[3], यत्राग्रलिखितस्य सिद्धान्तचतुष्टयस्य वर्णनं वर्तते । तद्यथा—

( १ ) दैव्या उत्पत्तेः सिद्धान्तः ।
( २ ) सामाजिकसंविदः सिद्धान्तः ।
( ३ ) शक्तिसिद्धान्तः ।
( ४ ) पितृसिद्धान्तश्च ।

उपर्युक्तसिद्धान्तस्य प्रसिद्धत्वादस्मिन्नेव ग्रन्थे वैदिकमतस्य वक्ष्यमाणत्वाच्चैतेषामाधुनिकविचारकाणां मतानां पुनरुक्तिमत्रानावश्यकीं मत्वा सङ्केतमात्रेणैव तानि सूच्यन्ते । भारते दैवीसिद्धान्तस्य मूलं वेदेभ्य उपलभ्यते[4] । पुरुकुत्सपुत्रः त्रसदस्युरात्मानं वरुणेन्द्राग्निरूपमपश्यत् । यथा—

अहमिन्द्रो वरुणस्ते महित्वोर्वी गभीरे रजसी सुमेके ।
त्वष्टेव विश्वा भुवनानि विद्वान्त्समैरयं रोदसी धारयं च ॥
अहमपो अपिन्वमुक्षमाणा धारयं दिवं सदन ऋतस्य ।
ऋतेन पुत्रो अदितेर्ऋतावोत त्रिधातु प्रथयद्वि भूम[5] ॥

राजा पृथिव्यामिन्द्ररूपेण प्रयुक्तः । अस्मादपि सुस्पष्टं नूतनञ्चोदाहरणं शतपथब्राह्मणे[6] वर्तते । 'भारतीय विचारधारा' पुस्तकस्य लेखकेन स्वकीयपुस्तकान्तरे[7] राज्योत्पत्तिविषयिका उपयुक्ता चर्चा कृतास्ति । अनेन अस्योत्पत्ति-

---

१. अथर्व० ४।८।१ ।
२. तत्रैव० १२।१।८ ।
३. राजनीतिशास्त्र पृ० ५० ।
४. भारतीय विचारधारा पृ० १९ ।
५. ऋ० ४।४२। ३–४ ।
६. शतपथ० ५।१।५।३ ।
७. प्राचीन भारत में राज्य और न्यायपालिका पृ० २।८।९।२३।४४।४५ ।

प्रसङ्गे नैसर्गिकविधेः सामाजिकानुबन्धस्य च वेदमूलकः पर्याप्तो विचारः कृतः। तेनास्य पर्यालोचनप्रसङ्गे सर्वाद्यमूलभूतस्य विधेः नैसर्गिकं सामाजिकं च विधिं स्वीकृत्य नूतनदृष्टिपूर्वकमतीव विशदः महत्त्वपूर्णश्च विचारः कृतः।

प्रसङ्गेऽस्मिन् एकः प्रश्नः पुरतः समायाति—यद् राज्यात् पूर्वं राजा, राज्ञः पूर्वं राज्यं वा वर्तते ? व्याकरणानुसारेण राज्ञो भावः कर्म वा राज्यमिति व्युत्पत्त्या राज्यात्पूर्वं राजा आसीदिति सिद्ध्यति। परमिदं मतमाधुनिकैः कैश्चित् प्राचीनैश्चाव्यावहारिकमेकपक्षीयं च मत्वा न स्वीकृतम्।

विभिन्नानामाधुनिकलेखकानां मतेन सर्वादावराजकावस्थान्तरं राज्यस्य वैराज्यस्य वोत्पत्तिः सिद्धा वर्तते। तेषां मतेन प्रारम्भावस्थायां समाजे नैसर्गिको विधिः सामाजिकोऽनुबन्धश्चासीत्।

'प्रानीन भारत में जनतन्त्र'—'नामके पुस्तके लेखकेन श्रीपाद-अमृत-डांगे-महोदयस्य मतमुद्धृत्योल्लिखितं यत्—'प्रारम्भावस्थायामराजकावस्थासीत्। तथैव 'आदिकालत एव राज्योत्पत्तिं यावत् समाजो विभिन्नाभ्यां द्वाभ्यामवस्थाभ्यां निर्गतोऽस्ति, ये अराजकवैराज्यपदाभ्यामभिधीयेते।' तथैवानेन महाभारतस्योदाहरणं प्रस्थाप्योल्लिखितं यत्—'सत्ययुगे राजा, राज्यं, दण्डः, दण्डदश्चेति किमपि नासीत्। सैव वैराज्यावस्था कथ्यते। तदा सर्वे मिथः साहाय्येन रक्षिता आसन्।'

कालान्तरे यदा मानवाः कामादिना ग्रस्तास्तदा तेषां नियन्त्रणार्थं दण्डदस्य राज्यस्योत्पत्तिः सञ्जाता। यथा--

राजदण्डभयादेके पापाः पापं न कुर्वते।
यमदण्डभयादेके परलोकभयादपि॥
परस्परभयादेके पापाः पापं न कुर्वते।
एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम्[२]॥

अयमेव लेखकः स्वपुस्तके लिखति--'उद्दण्डान् नियन्त्रयितुं राजदण्डस्यावश्यकत्वे राज्योत्पत्तिः सञ्जाता।' तथैवायं राजराज्ययोः कथमपि युगपदुत्पत्तिमस्वीकृत्य राज्ञः पूर्वं राज्यस्योत्पत्तिमेव द्रढयति[३]। अयं राज्योत्पत्तिं स्वीकृत्यैव पुनः प्रकारान्तरेण लिखति—'आदिकाले इयमवस्था राजग्रात्पूर्वमासीत्, समयेऽस्मिन् राजराज्ययोरुत्पत्तिं विना अनुत्पन्नेषु जाति-वर्ग-धर्म-विधानादिषु सत्सु अराजकाभिधानावस्थासीत्। राज्यस्योत्पत्तेरनन्तरं पुनः तस्योपर्युक्तायाः शान्तिमय्या अराज्यावस्थाया आगमनमसम्भवं प्रतीयते[४]।'

१. प्राचीन भारत में जनतन्त्र पृ० ४८।
२. महाभा० शान्ति० १५।५–६। ३. प्राचीन भारत में जनतन्त्र पृ० ५०।
४. प्राचीन भारत में जनतन्त्र पृ० १६३।

प्रसङ्गेऽस्मिन् अराजकम्, वैराज्यम्, राज्यं चेमे त्रयः शब्दाः अन्योन्यं मिश्रिता अस्पष्टाश्च सन्ति। एतेषां पृथक्करणे विदुषां मतैक्यं नैव प्रतिभाति। अतः प्रसङ्गत एतेषामपि विचारः क्रियते।

## अराजकं वैराज्यं च

'प्राचीन भारत में जनतन्त्र'—नामके पुस्तके प्रतिपादितमस्ति—'अराजकानन्तरं राज्यात्पूर्वं च वैराज्यावस्था। मानवस्य चारित्रिकं पतनमवलोक्य विद्वद्भिर्दुष्टान् शिक्षयितुं नियन्त्रयितुं च राज्ञा विना दण्डनीतेः प्राशासनिकानां विधीनां निर्माणं प्रारब्धम्। वैराज्यस्यादिस्वरूपे राजा तु नासीत्। परं प्राशासनिको विधिरवश्यमेवासीत्[1]।' इत्थमेतेषां मतेन निसर्गत एव एकं विधानं प्रथमतः अव्यक्तरूपेण प्रचलदास्ते, तथा समाजश्चाराजकावस्थायामासीत्। पश्चात् विद्वद्भिः सम्भूय प्राशासनिको विधिर्निर्मितः। तदा वैराज्यावस्थासीत्। अनन्तरं राज्यम्, पश्चाद् राजा प्रतिष्ठितः।

अराजकवैराज्ये इति द्वौ गणावास्ताम्। अराजकव्यवस्थाया आधुनिकैरराजकतावाद इत्यर्थः स्वीकृतः। इमौ भोजन-पान-निवासादिना सम्भूय स्थितौ[2]। तत्रैव अथर्ववेदस्य मन्त्रावुद्धृत्य विचारोऽयं प्रतिपादितोऽस्ति। यथा—

सहृदयं सांमनस्यमविद्वेषं कृणोमि वः।
अन्यो अन्यमभि हर्यत वत्सं जातमिवाघ्न्या॥
अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः।
जाया पत्ये मधुमतीं वाचं वदतु शन्तिवाम्[3]॥

वस्तुत ईदृशानि सौमनस्यसूक्तानि वेदेषु बहूनि सन्ति, परं तेषामभिप्रायः अराजकावस्थायां नास्ति। अयं तु वैदिकाचारः, इदमादर्शसमाजस्योत्कृष्टमुदाहरणं च वर्तते। अयं सार्वकालिकोपदेशो वर्तते। अयमेवाग्रे लिखति—'यदा दाशराजाः समर्थाः संजातास्ततः शनैः शनैः अराजकपरम्परायाः ध्वंसोऽभवत्।' तथैव 'द्वितीयेन वैराज्येनापि स्वस्य राज्यस्य, राजतन्त्रस्य वा कोऽपि विकासो नैव कृतः। एतेषां वैराज्यानां लोकतन्त्रव्यवस्था लोकसभया संचाल्यते स्म।'

ऋग्वेदतः यस्याः सामाजिकस्थितेः सङ्केतो लभ्यते, तया स्पष्टतः अराजकादर्शस्य रूपं पुरत आयाति। अराजकार्थमपरुद्धम्, अराजता, अराजतं चैतेषां शब्दानां प्रयोगो लभ्यते। क्वचित् क्वचिद् अराजकशब्दस्यापि प्रयोगो वर्तते[4]। अपरुद्धशब्दस्य प्रयोगः राजविहीनावस्थां सङ्केतयति। यथा—

श्येनो हव्यं नयत्वा परस्मादन्यक्षेत्रे अपरुद्धं चरन्तम्।
अश्विना पन्थां कृणुतां सुगं त इमं सजाता अभिसंविशध्वम्[5]॥

---

१. प्राचीन भारत में जनतन्त्र पृ० १६५। २. कौटिलीयार्थशास्त्रस्य भूमिका पृ० १३।
३. अथर्व० ३।३०।१–२।
४. 'प्राचीन भारत में राज्य और न्यायपालिका' पृ० ७. सटिप्पणम्।
५. अथर्व० ३।३।४ तथैव का० सं० १८।१; तै० सं० २।३।१; मै० सं० २।२।१; पञ्चविंशब्राह्मणम् १२।१२।६; कौशिकसूत्रम् १७।३०।

किन्तु अराजताशब्दः ईदृक्समाजस्य स्वरूपं पुरःस्थापयति, यस्मिन् नैसर्गिकेण विधानेन स्वतः संचालितायाः व्यवस्थायाः प्रयोगो भवति। अत्र व्यक्तिविशेषस्य शासनं नासीत्। कार्यपालिकाशक्तेः स्पष्टरूपेणोदयोऽपि नासीत्। तथापि यत् किमप्यासीत् तेन व्यक्तिसम्प्रभुताया जन्मापि नासीत्। नैसर्गिकेण विधिना व्यवस्थिते समाजे शक्तेः प्रयोजनं नासीत्। अयमेव विराट् (विगतः राट् यस्मात्) उक्तः। अपि च विराजः समाजस्य वर्णचतुष्टयं समुत्पन्नम्, यतो हि विराजः प्राग् वर्णानां वर्गाणां चास्तित्वं नासीत्। राज्यविहीनया नैसर्गिकस्थित्या सामाजिक-स्थितौ समागतायां राजनीतिकसमाजस्य स्थितिर्यदा सम्प्राप्ता तदा सम्पत्तेः, परिवारस्य, समाजस्य, वर्णानां च संरक्षणार्थं राज्यस्योत्पत्तिः संजाता। अधुना आदर्शेनाराजकेन राज्यसम्पन्नसमाजस्योदयो भवति। अस्यां स्थितौ राज्यमनिवार्यमभूत्। तेन विना मात्स्यन्यायस्य सूचकः अराजकः पुर आयाति[1]। ऋग्वेदतः समाजस्याङ्गिकं रूपं पुरत आयाति, यत्र ब्राह्मणादयो विराजोऽङ्गत्वेन मन्यन्ते[2]। अपि चाग्रे—अत्र विराड्वर्गेण राज्यविहीन ऋतेन च सम्पादितसमाजस्य प्रतीकं नास्ति। अपि तु सः ब्रह्मणः ईश्वरस्य वा पर्यायः 'पुरुषः' अमन्यत[3]।

अत्रैतेषां राज्ञः पूर्वं राज्यमिति मतेन अराजकवैराज्ययोर्विषये चास्माकं मतैक्यं नास्ति। अतोऽत्र प्रसङ्गतः राज्योत्पत्तेर्विचारात्पूर्वं समस्तसृष्टेः क्रमिक-मूलोत्पत्तिसूचकानां श्रुतिवचनानामेव सर्वादौ विचारः क्रियते। अनेन सम्बद्ध-विषयस्य लाभबाहुल्यं भविष्यति। यथा सम्बद्धविषये राज-राज्य-समाज-विधा-नादिषु क्रमेणैतेषामुत्पत्तिः कथं जाता, एभिः सह एतेषामन्योन्याश्रयः सम्बन्धश्च कीदृगासीदित्यादि।

राजशास्त्रमवलम्ब्य वेदानामध्ययनाद् विज्ञायते यद् यदा प्रारम्भिकी सृष्टिः समभवत् तदा सृष्टिस्थजीवानां नियन्त्रणार्थमृतस्यैव प्रभुत्वमासीत् अपि च तपस उत्पन्नाद् ऋताद् एव समस्तसंसारस्योत्पत्तिः ऋग्वेदत एव लभ्यते। अस्य विस्तृतं विवरणम् ऋतवर्णने द्रष्टव्यम्। अत्र संक्षेपेणेत्थमेव ज्ञातव्यमस्ति यद् भारतीय-राजनीतेः समाजशास्त्रस्य च मूलाधारः 'ऋतं' वर्तते यद् विधिरपि वक्तुं शक्यते। प्रारम्भिकः समाजो यदा अनेन सुनियन्त्रित आसीत् तदा सः परमशुद्ध आसीत्, यदा च तत्र विकारः समायातस्तदा दण्डप्रदस्य राज्यस्यावश्य-कतायां वैराज्यस्योत्पत्तिः सञ्जाता, इयं द्वितीया सृष्टिर्वक्तुं शक्यते। यतो राज्यस्य प्रारम्भो भवति, यत्र राज्ञा स्वसाधनैः[4] राष्ट्रे (राज्ये) शान्तिसंरक्षणं च संस्थाप्यते,

---

१. मा० पु० ४९, वा० पु० ८, कूर्मपु० २९, ब्रह्मपु० ५, विष्णुपु० ११६; महावस्तु १।३४०।८, वायुपु० १।८।८४, शान्ति० इत्याद्युद्धरणसङ्केतार्थं द्र० प्राचीन भारत में राज्य और न्यायपालिका पृ० ८।

२. प्राचीन भारत में राज्य और न्यायपालिका पृ० ७४।

३. तत्रैव पृ० ७९।१२२।२१७।

४. रत्नि(मन्त्रिमण्डल)प्रकरणम्, सभासमितिप्रकरणञ्च द्रष्टव्यमस्य निबन्धस्य।

यदा कदा राज्ये भ्रष्टे सति अराजकावस्थाऽपि आयाति सा वैराज्यस्यापरात्रस्थेति वक्तुं शक्यते। इत्थं राजशासनानुसारेण सर्वादौ ऋतं पश्चाच्च वैराज्यम् (विराड्) उत्पन्नमिति वेदादेव सिद्धयति। ततोऽत्र विराड् विविच्यते।

यद्यपि ऋगादिपुरुषसूक्तेऽपि प्रसिद्धः 'ततो विराडजायत'[1] इत्ययं मन्त्रः तत्तत्स्थलेषु वर्तत एव तथापि 'विराडग्रे समभवत्' अयं ऋगादिवेदाद् भिन्नः पाठः इममाशयं व्यनक्ति यत् ऋतस्याग्रे विराट् समभवत्। प्रस्तुते प्रसङ्गे राज्य-राजवैराज्याराजकादीनामुपजीव्योऽयं विराट् 'वि+राट्' (राज्) एवाग्रं अवर्तत। अस्य बहूनि रूपाणि अर्थाश्च सर्वत्र वैदिकपौराणिकादिवाङ्मये विपुलतया सुवर्णिताः सन्ति। अत्र सौकर्यार्थं विराजमवलम्ब्य सायणस्य मतं पुरःस्थाप्यते—

**विराडग्रे समभवद् विराजो अधिपूरुषः।**
**स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः॥**

पूर्वं पुरुषाद् ब्राह्मणादिसृष्टिरुक्ता तस्य सृष्टिरत्रोच्यते। अग्रे सृष्टयादौ विराड् विविधं राजन्ति वस्तूनि यस्मिन्निति स विराड् नाम पुरुषः समभवत्। 'सहस्रबाहुः पुरुषः' इत्यादिना उपवर्णिताद् आदिपुरुषाद् विराड्संज्ञकः पुरुषोऽजायत। 'तस्माद्विराडजायत'[2] इति शाखान्तरे विराजः आदिपुरुषादुत्पत्तिः समाम्नायते। तथा मानवे शास्त्रे स्मर्यते—

**द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत्।**
**अर्धेन नारी तस्यां च विराजमसृजत् प्रभुः॥**

इति (म० स्मृ० १/३२) विराजः अधि। अधिशब्दः पञ्चम्यर्थानुवादी। तस्माद् विराजः पुरुषः अन्यः पुरुषोऽजायत। अत्र वाजसनेयकम् 'विराजो अधिपूरुषः इत्येषा वै सा विराट् एतस्या एवैतद् विराजो यज्ञं पुरुषं जनयति[3]।' इति। स च तृतीयः पुरुषः यज्ञात्मा जातः उत्पन्नमात्र एव अत्यरिच्यत अतिरिक्त आसीत्। भूमिम् भूम्यादीन् सर्वान् लोकान् पश्चात् पश्चादभागे अथो अपि च पुरः पुरस्तात् 'पूर्वाधरावराणामसिपुरधवश्चैषाम्' इति असिप्रत्ययः। तत्संनियोगेन पूर्वशब्दस्य पुर आदेशः। स पुरुषो जातमात्र एव भूम्यादीन् लोकान् पश्चात् पुरस्ताच्च व्याप्य अतिक्रान्तवान्। अध्यात्मपक्षे। अग्रे सृष्टयादौ विराट् विविधं राजन्ति वस्तूनि यस्मिन्निति स विराट् मनःसंज्ञकः प्रजापतिः सहस्रबाहुः पुरुष इति प्रकृताद् महापुरुषाद् अजायत ततो विराजः अधि विराजमेव अधिकरणीकृत्य पुरुषः अन्यः प्रजापतिः सर्वभूतेन्द्रियपुरुषः समष्टयात्माभवत् निष्पन्नः। श्रूयते हि 'स मानसीन आत्मा जनानाम्' [4]इति। मानसीनः मनसा निष्पन्न इत्यर्थः। स वैराजः पुरुषो जातः प्रादुर्भूतमात्रः अत्यरिच्यत स्वयमेव आत्मानम् अत्यरेचयत्। कर्मकर्तरि रूपम्। अनेकधा भावलक्षणं स्वरूपातिरेकम् अभजत। भूतेन्द्रियादीनि असृजद् इत्यर्थः। श्रूयते हि। असतोधि मनोऽसृज्यत। मनः प्रजापतिः असृजत।

१. अथर्व० १९।६।९।
२. तै० आ० ३।१२।२।
३. श० ब्रा० १३।६।१।२।
४. तै० आ० ३।११।१।

प्रजापतिः प्रजा असृजत्[1] इति। पश्चात् भूतग्रामसृष्टेरन्ते भूमिमत्यरेचयत्। सामर्थ्यात् कर्मकर्तृभावोऽत्र निवर्तते। एवम् आकाशादिपृथिव्यन्तानां तत्त्वानां सृष्टिरुक्ता भवति। अथो भूमेरनन्तरं पुरः पूर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि सुरनरतिर्यगादीनां स्थावराणां च अत्यरेचयत् अतिरिक्तान्यकरोत्। पुर इति द्वितीया बहुवचनं शस्। छान्दसं विभक्त्युदात्तत्वम्। अध्यात्मपक्षे एव अन्योऽर्थः। अग्रे विराट् ब्रह्माण्डरूपो देहः तस्माद् आदिपुरुषाद् उत्पन्नः। विराजः अधि विराड्देहस्योपरि तमेव देहम् अधिकरणं कृत्वा पुरुषः तद्देहाभिमानी कश्चित् पुमान् अजायत। योऽयं सर्ववेदान्तवेद्यः परमात्मा स एव स्वकीयमायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत्। एतच्च आथर्वणिका उत्तरतापनीये स्पष्टम् आमनन्ति। स एव एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्य मूढो 'मूढ इव व्यवहरन्नास्ते माययैव।[2]' इति। स जातः विराट् पुरुषः अत्यरिच्यत अतिरिक्तोऽभूत्। देवतिर्यङ्मनुष्यादिरूपोऽभूत्। पश्चात् देवादिजीवभावाद् ऊर्ध्वं भूमिं ससर्जेति क्रियाध्याहारः। अथो भूसृष्टेरनन्तरं तेषां जीवानां पुरः शरीराणि ससर्ज। एवं भूतसृष्टिः पिण्डसृष्टिश्च प्रतिपादिता ॥' इति सायणः।

अयं विराट्शब्दः अथर्ववेदे बहुषु स्थलेषु लभ्यते। यथा—

**कुतस्तौ जातौ कतमः सो अर्धः कस्माल्लोकात्कतमस्याः पृथिव्याः।**
**वत्सौ विराजः सलिलादुदैतां तौ त्वा पृच्छामि कतरेण दुग्धा ॥**
**यो अक्रन्दयत्सलिलं महित्वा योनिं कृत्वा त्रिभुजं शयानः।**
**वत्सः कामदुघो विराजः स गुहा चक्रे तन्वः पराचैः[3] ॥**
**वत्सो विराजो वृषभो मतीनामा रुरोह शुक्रपृष्ठोऽन्तरिक्षम्।**
**घृतेनार्कमभ्यर्चन्ति वत्सं ब्रह्म सन्तं ब्रह्मणा वर्धयन्ति[4] ॥**
**विराजश्च वै स सर्वेषां च देवानां सर्वासां च देवतानाम्।**
**प्रियं धाम भवति य एवं वेद[5] ॥**

किन्तु तत्र भाष्यं नास्ति। तत्र तत्र उपर्युक्तार्थ एव अभीष्टः प्रतिभाति। तथैव अन्नार्थेऽपि 'विराजो' लभ्यते। यथा—

**विराजः श्नुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमा यवन्[6]।**

भवतु। अत्रेदं निश्चीयते यद्वेदेषु विराट्शब्दो बह्वर्थकः। प्रमुखतः तस्य तात्पर्यं 'राज' शब्दे वर्तते। अस्यैव बहुभिर्विद्वद्भिः अनेकार्थाः कृताः सन्ति। यथा—

विराट् परब्रह्म। पुरुषः। ऐतरेयब्राह्मणोक्तशासनस्य एकः प्रकारः। विशेषेण राजते इति। विगतः राजा यस्मिन्। अन्नं वै विराट्। वाग् वै विराट् इत्यादि।

---

१. तै० ब्रा० २।२।९।१०।
२. नृ० उ० ता० १।९।
३. अथर्व० ८।९।१-२।
४. अथर्व० १३।१।३३।
५. अथर्व० १५।६।२३।
६. अथर्व० ३।१७।२।

अत्र प्रमुखः प्रश्नो यत् सामान्यसृष्टेरनन्तरं यदा नैसर्गिकविधिना एव सर्वे नियन्त्रिता आसन् तदनन्तरं कामादिविकारैः समाजे अनियन्त्रिते सति अराजकावस्था समागता वैराज्याऽवस्था वा इति। यतो हि प्रसङ्गेऽस्मिन् उपर्युक्ताना-माधुनिकानामिदं मतम्—अराजकावस्थानन्तरं वैराज्यं पश्चाच्च राज्यमिति वर्तते। इदं यथार्थमयथार्थं वा इत्येवात्र संशोधनीयं वर्तते।

वस्तुतो यावत् कस्यचित् पदार्थस्य बोधः, प्राप्तिर्वा न स्यात् तावत् तस्याभावः अज्ञानं वा कथं स्वीक्रियते। वैराज्याऽराजकयोर्विषयेऽपि अयमेव तर्कः पुरतः आयाति। तथा च सायणस्य सम्पूर्णे विचारे अवगते सति निश्चितं भवति यत् सामान्यसमाजानन्तरं (जातिवर्गादिभावनया विहीनः एक एव) विराडुत्पन्नः तदैव ब्राह्मणादयः, सर्वा नीतयः, सर्वं विज्ञानं, सर्वे लोकाश्च जातिवर्गभेदेषु विभक्ताः। पश्चात् प्रसङ्गतः राज्ये भ्रष्टे सति अराजकावस्था समागता।

'राज्योत्पत्तेरनन्तरं पुनः तस्योपर्युक्तायाः शान्तिमय्यवस्थाया आगमनम-सम्भवं प्रतीयते'[1]। इदं मतं भ्रामकं प्रतीयते। एतादृशां विदुषामत्र प्रथमा भ्रान्तिः वर्तते। ते अराजकावस्थां शान्तिमयीं मन्यन्ते। द्वितीया भ्रान्तिः—राज्यानन्तरम् अराजकस्य पुनरव्याप्तिरिति। तत्र अस्माकं मतेनात्र 'पुनः' शब्दस्तु निरर्थको यतो हि अस्माकं मतेन वैराज्यानन्तरमेव अराजकावस्था वर्तते। अस्तु। मन्ये 'पुनः' स्वीकृतेऽपि तत्र कापि हानिर्नास्ति। यतः स्वातन्त्र्यानन्तरं पारतन्त्र्यम्। जन्मानन्तरं मरणं पुनश्च जन्म। अपि च, किं पुनः पुनः युगचक्रपरिवर्तनं नैव भवति? भवति एव। अयं सर्वशास्त्राणां निर्णयो वर्तते। अत उपर्युक्तानां सर्वं मतं भ्रमात्मकमेव सिद्धम्।

अपि च वि + राट् (राज्) राज्यहीनां स्थितिं जनयति। शब्दोऽयमराजकस्य पर्यायो नास्ति। अराजकाः राज्योत्पत्तेरनन्तरमेव भवितुमर्हन्ति। आदौ राजा समागतः पश्चात् यदा राज्ञा प्रजा उत्पीडिता तदा संक्रुद्धेन समाजेन राजा विध्वस्तः। अयमेव विध्वंसकः समाजः अराजकशब्देन विज्ञापितः[2]।

इदमपि मतं पूर्णतया भ्रमात्मकं नास्ति, परं किञ्चित् संशोधनीयमवश्यं वर्तते। यथा अनेन लिखितं वर्तते—विराड् राज्यहीनां स्थितिं जनयति। शब्दोऽयं अराजकस्य पर्यायो नास्ति। वस्तुतः विराट् राज्यहीनः इति न। विविधं राजन्ति इति सायणमते स्वीकृते सति विराजि अव्यक्तरूपेण राज्यं वर्तते एव।

इत्थं विवेचिते सति सिद्धं भवति यद् वैराज्यानन्तरमेव अराजकावस्था आयाति। तथैवात्र सायणोक्तं 'वैराज्यम्' यद् मानवकल्पित राज्यस्य मूलभूतं वर्तते तद्दैवं नैसर्गिकं वा वक्तुं शक्यते। अनेन प्रकारेण पक्षैकसमर्थकानां राज-मूलवादिनामपि समर्थनं भविष्यति।

---

१. प्राचीन भारत में राजतन्त्र पृ० १६३।

२. अथर्ववेद–मातृभूमि और स्वराज्यशासन पृ० ५२।

## राज्यस्य मूर्तिमत्त्वम्

राज्यस्य स्वरूपं कस्यचिद्देहधारिण इव वर्तत इति विचारौ यवनैः पाश्चात्यैः कौटिल्यादिभिरेव प्रसारितः अथवा सः वेदेऽपि वर्तते ? राजनीतिशास्त्रानुसारेण[1] प्लेटो-अरस्तू-सिसरो-सन्तपाल-हाब्स-ब्लंश्लीप्रभृतयो विद्वांसः किञ्चित्प्रकारान्तरेण राज्यस्य मूर्तं स्वरूपं स्वीकुर्वन्ति। वेदोत्तरवर्त्तिग्रन्थेष्वपि भारतीयैर्मनुभीष्मबृहस्पतिकौटिल्यशुक्रादिभी राज्याङ्गानि[2] लिखितानि। डा० आल्तेकरेण[3] कौटिल्यादिभिरुक्तेन राज्याङ्गेन सहाधुनिकानां राज्यस्य मूलभूततत्त्वानां समन्वयस्य प्रयत्नः कृतोऽस्ति। परमाधुनिकैस्त्वनयोर्विषययोः पृथक् पृथक् प्रकरणमवलम्ब्य विचारः कृत[4]।

इत्थं स्पष्टं भवति यद्राज्यस्य मूर्तिमत्त्वसिद्धान्तः कौटिल्येनापि स्वीकृतः। कौटिल्यस्तु वेदाद् व्यतिरिक्तं किमपि नैव वर्णयति। अतः राज्यस्याङ्गाङ्गिभावः वेदेष्वन्वेषणीयः। वेदेषु तु राज्यस्यैव न प्रत्युत प्रायः समस्तविषयाणां क्वचित् देहधारिसदृशवर्णनं क्वचिच्च किमपि रूपकमवलम्ब्य अङ्गाङ्गिभावेन प्रस्तुतीकरणस्य बहून्युदाहरणानि[5] उपलभ्यन्ते। तत्र राज्यस्याङ्गाङ्गिभावे किमस्ति वैलक्षण्यम् ?

वस्तुतः सर्वादौ वेदे एव राज्यस्य जैविकम् आङ्गिकं वा विवरणं सूत्ररूपेण प्रकारान्तरेण वा सम्यगुपलभ्यते। यथा--

शिरो मे श्रीर्यशो मुखं त्विषिः केशाश्च श्मश्रूणि।
राजा मे प्राणो अमृतं सम्राट् चक्षुर्विराट् श्रोत्रम्॥
जिह्वा मे भद्रं वाङ्महो मनो मन्युः स्वराड् भामः।
मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सहः॥
बाहू मे बलमिन्द्रियं हस्तौ मे कर्म वीर्यम्।
आत्मा क्षत्रमुरो मम॥
पृष्ठीर्मे राष्ट्रमुदरमंसौ ग्रीवाश्च श्रोणी।
ऊरू अरत्नी जानुनी विशो मेऽङ्गानि सर्वतः॥
नाभिर्मे चित्तं विज्ञानं पायुर्मे पचितिर्भसत्।
आनन्दनन्दावाण्डौ मे भगः सौभाग्यं पसः।
जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि विशि राजा प्रतिष्ठितः॥

---

१. राजनीतिशास्त्र पृ० ४४।

२. मनु० ९।२९४, महाभा० शा० ६९।६५। शुक्र० १।६२, अर्थशास्त्रम् ६।१।

३. प्राचीन भारतीय शासन पद्धति पृ० ३२।

४. राजनीतिशास्त्रम् पृ० ४१।

५. 'चत्वारि शृङ्गा त्रयो अस्य' अस्य व्याख्या विभिन्नैर्व्याख्याकारैः पृथक् पृथग्रूपेण कृता।

प्रति क्षत्रे प्रति तिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रति तिष्ठामि गोषु।
प्रत्यङ्गेषु प्रति तिष्ठाम्यात्मन् प्रति प्राणेषु प्रति
तिष्ठामि पुष्टे प्रति द्यावापृथिव्योः प्रति तिष्ठामि यज्ञे[1]॥

अनेन प्रकारेण वयं पश्यामः यद् राज्यस्येदं वर्णनं वेदादेव स्वीकृत्य मन्वादिभिस्तस्य विशदं वर्णनं कृतम्।

## चत्वारि मूलतत्त्वानि—

तत्राधुनिकाः प्रायः मतैक्येन राज्यस्य मूलतत्त्वचतुष्टयं स्वीकुर्वन्ति। यथा—जनसमुदायः, भूखण्डः, सम्प्रभुता, शासनञ्चेति। यद्यप्येतेषां सामान्यविचारः प्रसङ्गतः परिचयो वा राज्यस्य परिभाषायां कृतः, तथैव राज्यस्य जैविकसिद्धान्तनिरूपणे अङ्गाङ्गिभावमवलम्ब्य आल्तेकरस्य विचारोऽप्यस्माभिरवलोकितः, तथाप्याधुनिकपद्धत्यनुसारेणात्रास्मिन् विषयेऽपि विचारः क्रियते। अत्रेदमेवान्वेषणीयं वर्तते यदनेन सह वेदस्य समन्वयो वर्तते न वा?

'प्राचीन भारत में राज्य और न्यायपालिका' ग्रन्थानुसारेण—'अत्र राज्यस्य तत्त्वानि–विधिः (ऋतम्), राष्ट्रम्, जनसंख्या (विश्), सम्प्रभुता च[2]।' विचारोऽयं युक्तिसङ्गतः शास्त्रसम्मतश्च प्रतीयते। अत्रैतेषां पदार्थानां सहजत्वेन समन्वयो भवति।

(१) ऋतम् (विधिः)—अस्य शासनेन सह समन्वयो भवति यतो हि ऋतप्रकरणे प्रतिपादितं वर्तते यत् शासनस्य विधानेन सह मौलिकः सम्बन्धो वर्तते[3]।

(२) राष्ट्रम् (राज्यम्)—अस्य भूखण्डेन सह समन्वयो वर्तते यतः पुरप्रकरणे इदं प्रतिपादितं वर्तते यत् (पोलिस) नगरराज्यस्य सम्बन्धः पुरेण सह कृतोऽस्ति। पुरस्याधारः भूमिः वर्तते[4]। आदर्शराज्यस्य भूविस्तारः आसेतुहिमाचलमासीदित्यनुमातुं शक्यते यतो हि राज्याभिषेकप्रसङ्गे सर्वासां नदीनां समुद्राणां च जलमावश्यकं भवति। तथैवौदुम्बरादयः। अत्रैको विचारो वर्तते यद्यत्र राज्ञामधिकारो न स्यात् तत्र स ततः जलं काष्ठपल्लवादीनि च कथं लब्धुं शक्नोति? सन्दर्भेऽस्मिन् चतुर्दिक्षु समुद्रपर्यन्तायाः पृथिव्या 'एकराड्' व्यवस्थाया उदाहरणानि वेदेषु वर्तन्ते[5]। एवमेव वैदिकैः भूमेः भूप्रदेशस्य च (यस्य राज्ये महत्त्वपूर्णस्थानं वर्तते) सूचकानां स्थलानां संरक्षणार्थं कृता विविधाः प्रयोगाः सूत्रादिषु लभ्यन्ते[6]।

---

१. यजुः २०।५–१०।
२. प्राचीन भारत में राज्य और न्यायपालिका पृ० १२।
३. अस्यैव निबन्धस्य ऋतप्रकरणम् द्र०।
४. अथर्ववेद–मातृभूमि और स्वराज्यशासन, पृथ्वीसूक्त।
५. 'समुद्रपर्यन्तायाः एकराडिति' ऐ० ब्रा० ८।१५।
६. कौशिकसूत्रम् ५।२; कामन्दकीयनीतिसारेऽपि ४।५०।

द्वादशे काण्डे प्रथमे सूक्ते सायणो लिखति—'ग्रामपत्तनादिरक्षणार्थम्' । अस्मिन्नेव सन्दर्भे पार्थिवो महाशान्तिः, भूमिकामः इत्यादिप्रकरणानि विचारणीयानि । कौशिकसूत्रे यद्दृतिकर्म उक्तं तद् भूप्रदेशस्य, प्रान्तस्य, राष्ट्रस्य वा विहितम् । 'भौमस्य' इदं दृतिकर्म किमर्थमिति ? पुष्टिकामः, व्रीहियवान्नकामः, मणिहिरण्य-कामः इत्यादि ।

अस्मिन्नेव सन्दर्भे राष्ट्रराज्ययोर्भू्यतिरिक्तः कश्चिद् विचारः क्रियते । वस्तुतः राज्यराष्ट्रदेशराष्ट्रियतादिविषया अन्योऽन्यमीदृशाः सम्मिश्रिता येषां सुस्पष्टं विश्लेषणं परमावश्यकं वर्तते । यद्यपि वेदोत्तराणां मनु[1]-भीष्म-कौटिल्यादिप्राचीनानामाधुनिकानां स्वदेशीयानां पाश्चात्त्यानाञ्चाप्यस्मिन् विषये सुस्पष्टीकरणस्य प्रयत्नः प्रचलति । परमद्यावधि सम्यङ्निर्णयो नैव संजातः । क्वचिद् देशराज्ययोः कृते राष्ट्रस्य प्रयोगः[2] । भवतु नाम । वेदेषु तदन्वेषणीयम् । कोशेषु[3] राज्यार्थं राजकीयक्षेत्रार्थं वा राष्ट्रं राज्यं चेत्युभौ शब्दौ प्रयुज्येते ।

अथर्ववेदे राष्ट्रस्योत्पत्तिः श्रूयते । यथा—

**भद्रमिच्छन्त ऋषयः स्वर्विदस्तपो दीक्षामुपनिषेदुरग्रे ।**
**ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उपसंनमन्तु[4] ॥**

अर्थात् कल्याणकामनया दीक्षितैर्ऋषिभिस्तपस्तप्तं येन राष्ट्रं बलमोजश्चोत्पन्नम् । अनेनावबुध्यते यद् राष्ट्रमनायासेन न लब्धं, मानवेन परिश्रमेणैव लब्धम् । तथैव—

**ये देवा राष्ट्रभृतोऽभितो यन्ति सूर्यम् ।**
**तैष्टे रोहितः संविदानो राष्ट्रं दधातु सुमनस्यमानः[5] ॥**

अनेनावबुध्यते यद् ये पराक्रमिणः भवन्ति त एव राष्ट्रस्य शासनं कुर्वन्ति । मन्ये राज्यादिशब्दाद्राष्ट्रं पृथगिति प्रवृत्तिर्वेदमूलिका एव । यतो हि वेदेषु राष्ट्रशब्दः ईषत्समानार्थकैः शब्दैः सहापि वर्णितः । तद्यथा—

**स मे राष्ट्रं च क्षत्रं च पशुनोजश्च मे दधत्[6] ।**

अपि च—

**सा नो भूमिस्त्विषिं बलं राष्ट्रे दधातूत्तमे[7] ।**

अत्रोपर्युक्तशब्दचतुष्टये राज्यस्य मूलभूततत्त्वचतुष्टयस्य सङ्केतो वर्तते । तथैवेदं परस्परस्य पार्थक्यमपि जनयति । राष्ट्रस्य लक्षणं ब्राह्मणेषु—

---

१. 'पशुधान्यहिरण्यसम्पदा राजते शोभते इति राष्ट्रम्'—नीतिवाक्यामृते जनपदसमुद्देशे १; हिन्दूराज्यशास्त्र पृ० ३९, राजनीतिशास्त्र पृ० २८-३३ । उक्तग्रन्थेषु मन्वादीनां मतानां संग्रहो वर्तते ।

२. जातककालीन भारतीय संस्कृति पृ० ५० ।
३. वैदिककोशः पृ० ४४६ ।
४. अथर्व० १९।४१ ।
५. तत्रैव १३।१।३५ ।
६. अथर्व० १०।३।१२ ।
७. तत्रैव १२।१।८ ।

'श्रीर्वै राष्ट्रम्'[1], 'श्रीर्वै राष्ट्रमश्वमेधः[2]....', 'राष्ट्रं वा अश्वमेधः[3]....' 'अष्टौ वै वीरा राष्ट्रं समुद्यच्छन्ति राजभ्राता च राजपुत्रश्च पुरोहितश्च महिषी च सूतश्च ग्रामणी च क्षत्ता च संग्रहीता चैते वै वीरा राष्ट्रं समुद्यच्छन्त्येते वाऽभ्यभिषिच्यन्ते[4]', 'क्षत्रं हि राष्ट्रम्'[5], 'राष्ट्रं पसः[6]', 'राष्ट्रं मुष्टिः[7]', 'राष्ट्रं हरिणः[8]', 'राष्ट्राणि वै विशः[9]', 'सविता राष्ट्रं राष्ट्रपतिः[10]'।

इत्थं वैदिकं वर्णनमभिवीक्ष्य विज्ञायते यद् राज्यराष्ट्रयोः सामान्यतः समत्वेऽपि भेदबुद्धिः आसीदेव। सामान्यतः राज्ये शासनस्य बाहुल्यं वर्तते। तत्र संस्कृतिः, भाषा, रक्तं, जातिः, सम्पन्नता च गौणी प्रतिभाति। राष्ट्रे एते सर्वे प्रधानतया प्रतीयन्ते। राष्ट्रं राज्याद् बृहद् भवति, तस्मिन् बहूनां राज्यानामन्तर्भावश्च। राष्ट्रं राज्यस्यादावन्ते च तिष्ठति। राष्ट्रं नाम सङ्घविशेषस्य दर्शनेन विचारेण वीरभावनयोत्प्रेरितञ्च सर्वस्याधारकमुपजीव्यञ्च चिरजीवि समृद्धं वस्तुजातं वर्तते। परम्परागतभावनयाऽभिमानेन चात्मानं तस्य यथार्थसंरक्षकम्मन्याः स्वराष्ट्रं संरक्षन्ति नामतोऽपि। यद्यपि तत्र नकविधानि राज्यान्यायान्त्यपयान्ति च। परं राष्ट्रं येन केनापि प्रकारेण किमुत भावनया हि तिष्ठत्येव। इदं सर्वेषामाधारत्वादिव भूमितत्त्वेन संयोज्यते। भूमिः स्थिरा अतस्तदनुषङ्गि राष्ट्रमपि स्थिरं भवितुं शक्नोति। राष्ट्रिया भावना एव मातृभूमिभावना।

( ३ ) जनसंख्या[11] (विश्)—ब्राह्मणादिसाहित्येषु लब्धः जनकशब्दः स्वयमेव जनस्य पर्याप्तं महत्त्वं सूचयति। तथैव पञ्चजनः, जनता, जनपदः, जनमेजयः, जनश्रुतकाण्डिकः, जन्तुः, जन्मादयः शब्दाः अस्यैव प्रतिपादनं कुर्वन्ति। जनपदशब्दाभ्यां जनसंख्यायाः तत्रस्थक्षेत्रफलस्य च निर्देशो लभ्यते। भाषाविज्ञानदृष्टयाऽपि गोत्र-गेनेस-गेन्सशब्दानां विश्शब्देन सह विचारे कृते विषयस्यास्य पर्याप्तं रहस्यमुद्घाट्यते।

( ४ ) सम्प्रभुता—प्रसङ्गेऽस्मिन् राज्यस्य सम्प्रभुताविषये पर्याप्तं विवरणमुपलभ्यते वेदेषु। इत्थं दृश्यते यद् वर्तमानस्य राज्यस्य मूलभूततत्त्वचतुष्टयस्य मूलमपि वेदेषु स्पष्टं प्रतीयते। तत् कथं वक्तुं शक्यते यदयमाधुनिकामेव शोध इति।

---

१. शतपथ ब्रा० ६।७।३।७।
२. तत्रैव १३।२।९।२–४।
३. तत्रैव १३।१।६।३।
४. ता० ब्रा० १९।१।४८।
५. ऐ० ब्रा० ७।२२।
६. तै० ब्रा० ३।९।७।४।
७. श० ब्रा० १३।२।९।८।
८. तत्रैव १३।२।९।८।
९. ऐ० ब्रा० ८।२६।
१०. श० ब्रा० ११।४।३।१४।
११. जातककालीन भारतीय संस्कृति पृ० ५०।११७।१७७; तथा च प्राचीन भारत में राज्य और न्यायपालिका पृ० ३२२–३२३।

## राज्यस्योद्देश्यम्—

सारांशत इदमेव वक्तुं शक्यते यद्राज्यस्य प्रमुखोद्देश्यं वर्तते जनतायाः सर्वतोभावेन संरक्षणं राष्ट्रे शान्तिस्थापनञ्च[1]। तथैव विधिरक्षा जनरक्षा च[2]। वेदेष्वपि स्थले स्थले राज्ञः अभिषेकनिर्वाचनादिप्रसङ्गेषु राज्यमवलम्ब्य तस्य प्रमुख-कर्त्तव्यादिभिरिदमेव ज्ञापितं वर्तते यद् हे राजन्! येन केनापि प्रकारेण जनतायाम् राज्ये च शान्तिं संस्थाप्य सुसंरक्षणं कुरु येन सर्वत्र तव प्रशंसा भवेत्। तत्र सर्वेषामेका एव कामनासोद् यदत्र राज्ये निष्पक्षो न्यायाऽपराधिनि दण्डश्च राज्यस्य प्रधानं कर्त्तव्यं भवेत्।

## राज्यस्य प्रकाराः—

वैदिकराज्यशास्त्रे यदा कदा राज्यस्य प्रकाराः के? इति प्रश्ने समुपस्थिते प्रायः सर्वेषां दृष्टिरैतरेयादिब्राह्मणादौ 'साम्राज्यं भौज्यं स्वाराज्यं वैराज्यम्' इत्यादिषु आपतति। इदं यथार्थं वर्तते, तथापि प्रायः सर्वे लेखका[3] एतेषामुपर्युक्तानां शासनान्तर्गतत्वेनापि वर्णनं कुर्वन्ति। अनेनात्र सन्देहो जायते यदिमे शासनस्य राज्यस्य वा प्रकाराः सन्तीति विषयोऽयमनिर्णीत एव। तथैव वैदिककोशे राज्य-सत्ताया अनेके प्रकाराः प्रयुक्ताः[4]। यथा 'भौज्यं नाम भोजोपाधिधारिणो राज्ञः पदम्' इत्याद्यवलोक्य सन्देहो भवति यदिमे प्रकाराः राज-राज्यशासनेषु कतमस्य वर्तन्ते।

वस्तुतः राजराज्यशासनानि पृथक् पृथग् वर्तन्ते। ब्राह्मणग्रन्थेभ्यो विज्ञायते यत् पुरा राजानः स्वशक्तिज्ञापनार्थं तत्तत्पदसूचकान् यज्ञान् कुर्वन्ति स्म। यो यादृशं यज्ञं करोति तादृश्या पदव्या अलङ्क्रियते स्म। पश्चात्तस्य पदवी विरुद-त्वेन प्रसिद्धि गता। पश्चादियमेव पदवी स्थानदिग्वंशानुसारिणी संजाता इत्यनुमीयते।

विभिन्नेषु वैदिकस्थलेष्वेतेषां राज्यानामुल्लेखोऽस्ति[5]। यथा—१. साम्राज्यम्, २. भौज्यम्, ३. स्वाराज्यम्, ४. वैराज्यम्, ५. पारमेष्ठ्यम्, ६. महाराज्यम्, ७. आधिपत्यमयम्, ८. समन्तपर्यायी, ९. सार्वभौमम्, १०. सार्वायुषम्, ११. एकराज्यम्, १२. द्विविधं द्विराजं वा, १३. गणराज्यम्, १४. उग्रम्, १५. नीच्यम्, १६. अपाच्यम्, १७. राष्ट्रिकम्, १८. आक्रन्दम्, १९. विप्रराज्यम्, २०. यमराज्यम्, २१. अपरुद्धम्, २२. जानराज्यम्[6], २३. बहुपाय्यस्वाराज्यञ्च।

१. राजनीतिशास्त्र पृ० १२६–१३४।
२. प्राचीन भारत में राज्य और न्यायपालिका पृ० ४४ सटिप्पणम्।
३. तत्रैव–पृ० ४७–४८।　　४. वैदिककोश पृ० ४४५।
५. मै० सं० ११।५, तै० ब्रा० १।३।२।२, ऐ० ब्रा० ८।१२, शां० श्रौ० सू० १७।१६।३।
६. इमावन्तिमौ द्वौ प्रकारौ द्र० अथर्ववेद–'मातृभूमि और स्वराज्यशासन, अस्य भूमिकायां द्वितीये पृष्ठे।

उपर्युक्तानां प्रकाराणां विविधा उल्लेखा दिग्देशयोग्यतानुसारेण विभिन्नेषु पुस्तकेषु[1] विवेचिताः सन्ति ।

## राज्योपजीव्यं पुरम् (अर्वाचीनदिशा)

यूनानदेशीयप्राचीननगराण्युपजीव्यैव राजनीतिशास्त्रस्यारम्भो जात इत्याधुनिकाः । तद्देशीयैः प्राचीनैर्लेखकैः सम्पूर्णराज्यविज्ञानस्य कृते 'पॉलिटिक्स' (राजनीतिः) इति शब्दस्योपयोगः कृतः । विदितमस्तु यद् विषयेऽस्मिन् अरस्तू-महोदयस्य महाग्रन्थस्य नाम एव 'पॉलिटिक्स' वर्तते । शब्दोऽयं यूनानभाषायाः 'पोलिस' अर्थात् 'नगरराज्यम्', 'पालिटिया'[2] शब्दस्यानुगामी वर्तते । एतेषां नूतन-विचारकाणां मतेन सिद्धयति, यद् राजनीतिशास्त्रस्यारम्भ एव भारताद् बहिः संजातः । तथैव राजनीतेः कृते नगरमेवाऽऽवश्यकं प्रतिपादितम् । तथापि भारतीय-वैदिकवाङ्मयस्य विधिवद् अध्ययने कृते सतीदमेव ज्ञायते यत्तेषां वेदाध्ययनस्याभावः, यतो हि विश्वस्याद्यं साहित्यं वैदिकं वाङ्मयं वर्तते, येन भारतीयाः गौरवान्विता जाताः । वैदिके साहित्ये समाज-धर्म-नीति-शासन-विज्ञानादीनां पर्याप्ता सामग्र्युपलभ्यते । अतो यूनानदेशात् (अन्यस्मात् कस्माच्चिद् विदेशाद्वा) राज्यशासनस्य प्रारम्भ इति मतं निरस्तम् । तथैव अत्रेदं न विस्मर्तव्यं यद् वेदेषु प्रतिपादिता आर्यसभ्यता ग्रामीणा, लोकतन्त्रा चासीत् प्रारम्भकाले पश्चात् सा विकासक्रमेण नागरिकी राजतन्त्रा चाभूत् । यत्र साधुस्वभावाद् आर्यैः नगरसभ्यता प्रपञ्चबहुलेत्यभिलक्ष्य नैव स्वीकृता । अनेन ते अविदितराज्यशासनाः कथं भवेयुः ? यतो हि वेदानुसारेण ग्रामेऽपि राज्यशासनस्य बहूनि प्रमाणान्युपलभ्यन्ते । शासनविधिज्ञैः मन्त्रज्ञैः वैदिकैः राष्ट्र-राज्यसभा-समिति-दुष्टापराधार्थ-विधि-शिक्षा-शुल्क व्यवस्थादिसूचकानां सूक्तानां लाभः, पालनं च ग्रामे एव तिष्ठद्भिः सम्पादितमिति सर्वत्र दृश्यते, श्रूयते च तस्योपयोगो ग्रामे नगरे च ।

अत्र पोलिसशब्देन यन्नगरं स्वीकृतं तद्दुर्गार्थकमेव यतो हि राज्यस्य सावयवत्वमङ्गीकृत्य आधुनिकानां चतुर्णां मूलतत्त्वानां[3] विचारे कृतेऽपीदमेवावगम्यते यद् राज्यस्य कृते सर्वप्रथमं सुरक्षितं स्थानमावश्यकं भवति यस्यापूर्तिः-मन्वादिभिः प्रतिपादितेन राज्यस्य सप्ताङ्ग(प्रकृति)सिद्धान्तेन दुर्गेण पुरेण वा भवति । दुर्गपुरयोर्वा विकासो ग्रामत[4] एव, न तु नगरात् ।

उपर्युक्तेन विमर्शेन सिद्धयति यद् राज्यस्योत्पत्तिर्भारते वर्षे चिरकालाच्छ्रूयते । अनेन यवनादिपाश्चात्त्यानां नगरादेव सर्वप्रथमतः राज्योत्पत्तिरिति

१. वैदिककोषः, प्राचीन भारतीय शासन पद्धति पृ० २७–३०, प्राचीन भारत में राज्य और न्यायपालिका पृ० ४७–५५, जातककालीन भारतीय संस्कृति पृ० ५०–६३ ।

२. राजनीतिशास्त्र पृ० २ ।

३. जनसङ्ख्या भूमि-शासन-सम्प्रभुता चेति ।

४. उत्तरभारतस्य ग्रामेषु पुरशब्दस्य व्यवहारः अधुनाऽपि वर्तते ।

मतं निरस्तम्। तत्रादौ विविधैः पुरविषयकैर्विवरणैः सह त्रिपुरस्य सम्पूर्ण उल्लेखः क्रियते समासेन।

## त्रिपुरम् ( वैदिकदिशा )

त्रिपुरस्योल्लेखः प्रायो बहुषु पुराणेषूपलभ्यते एव येन केनापि प्रकारेण। त्रिपुरः[१] एकः असुरसङ्घः। पुरा मयासुरेण ब्रह्मणः प्रसादात् त्रिपुराणां रचना कृता। तानि त्रिपुराणि क्रमशः लौह-रौप्य-सुवर्णमयान्यासन्। सर्वसम्पन्नत्रिपुराणामाधिपत्यं तारकासुरस्य पुत्रैः तरनाक्ष-कमलाक्षविद्युन्मालिभिः पृथक् पृथग् अलभ्यत[२]। एत एव त्रयोऽसुराः 'त्रिपुर' नाम्ना प्रसिद्धि गताः। ब्रह्मणादिष्टैरपि त्रिपुरैरधर्माचरणेन देवा अनादृताः। अतः शिवेन तेषां वधः कृतः'[३] बुद्धरूपेण विष्णुना ते विमोहिताः। इत्यादि।

वेदोत्तरसाहित्ये (सूत्रपौराणिकादिवाङ्मये) पुरशब्दस्यार्थो विशेषेण नगर-दुर्ग-यानादिपर्यायो ध्वन्यते। यत् किमपि भवेदिदं तु सत्यम्, यद्येन केनापि प्रकारेण पुरविषयें विपुला सामग्री त्रिपुराख्याने ( सप्ताङ्गान्तर्गतदुर्गादिकमवलम्ब्य ) उपलभ्यते। अत्रेदं न विस्मर्तव्यं यत् पुराणार्थशास्त्रादिनाख्याताः त्रिपुरदुर्गादयो वेदमूलका एव। यथा तैत्तिरीयश्रुतौ एतद्विषयपरिपोषको गम्भीरार्थकः सम्पूर्णः मन्त्रः श्रूयते। यद्यप्यस्य शब्दस्य क्वचिदाध्यात्मिकादिदेवशास्त्रीयं स्वरूपं निश्चित्य तद्याथार्थ्यमुपेक्षितं भाति तथापि विवरणे तस्मिन् पठिते सति अयं मन्त्रो देव-दानवव्याजेन आर्यानार्ययोर्युद्धे साहाय्यभूतानां पदार्थानां सूचक इति विज्ञायते। यथा च तत्र मन्त्रः—

या ते अग्नेऽयाशया रजाशया हराशया तनूर्वर्षिष्ठा
गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा[४]॥

अस्य दुरवगमस्यार्थस्य परिचयः सायणभाष्येण विना अशक्य एव। अतस्तद्भाष्यादेव सारभूतानां स्थलानां निर्देशः क्रियते—

( १ ) अत्र समस्ते प्रकरणे त्रिसङ्ख्यायाः प्राधान्यं वर्तते। अनेन त्रिलोक-देव-गुण-शक्ति-धात्वादीनां भावानां तात्पर्यं ज्ञायते।

( २ ) 'हराशया—हिरण्ये शेते इति हराशया।' इदं स्पष्टतः कठिनतर-धातूदाहरणम्। 'अयाशया अयसि शेते' तथैव 'रजाशया रजसि शेते' इति तु ऋज्वर्थकावेव।

( ३ ) 'गह्वरे—स्प्रष्टुमशक्ये तप्ते लोहे, तप्ते रजते, तप्ते हिरण्ये वा तिष्ठतीत्यर्थः।' निघण्टौ[५] जलार्थकगहनशब्देन सह गह्वरशब्दो लभ्यते। अत्र भाष्यकारेण गह्वरस्य तप्तलोह इत्यर्थः कृतः। अस्त्यत्र किमपि विशिष्टं वैज्ञानिकं

१. प्राचीनचरित्रकोषे। २. महाभा० कर्णप० २४।४।
३. शि० पु० शिवरुद्रसं० ४।५।
४. तै० सं० १।२।११।५। अपि च तत्रैव ६।२।३।१।
५. निरुक्त-पदसूची...., तत्रैव गहनशब्दोऽपि द्र० निघ० १।१२।

रहस्यम् । मन्ये लोहादयो धातवः तप्यन्ते । परम् ऋतेऽग्निं नैव सन्तप्यन्ते । तथैवात्र पुरमेतत् सर्वदैव सन्तप्यत इति ध्वन्यते । अर्थादत्र केनचिद् विद्युत्प्रयोगेण अस्पृश्यत्वं सम्पादयन्ति । यथा अधुना विद्युद्धारा(करेण्ट)संयोजनेन कोषागारादयः दस्युचौरेभ्यः संरक्ष्यन्ते । वर्तमानवैज्ञानिकानां कृत इदं महत् क्रान्तिकारकमुदाहरणं वर्तते । यत् तदा त्रैलोक्यभूतस्य त्रिपुरस्य विद्युद्धारया वेष्टनं स्वपुररक्षणस्योपायः तत्कालीनैः शासकैरन्वेषितः ।

( ४ ) 'उपसद्'—अत्रोपसद्शब्दोऽपि महत्त्वपूर्णो विज्ञायते । तत्र खलु आर्याणां संघटनप्रवृत्तिः, तस्य प्रभावश्च विश्रुतोऽस्ति । उपसद्यपि सङ्घटनस्य महत्त्वं संसूच्यते । अनेन श्रुत्युक्तहोमसन्दर्भेणावगम्यते यद् यदा ते देवाः स्वकार्यसिद्धौ असाफल्यं प्राप्नुवन् तदा तैरुपसदैव विजयस्योपायो निश्चितः । तत्र भाष्ये उपसद्धोमस्य तात्पर्यं वैरिदुर्गनाशनमिति वर्तते । अर्थादुपसदुत्पत्तिर्वैरिदुर्गनाशनार्थम् एव जाता इति ।

( ५ ) त्रिपुरप्रसङ्गे वैज्ञानिकभूगोलसरणौ एको महत्त्वपूर्णः सङ्केतो लभ्यते । अस्यानुशीलनात् प्राग् अस्माभिः भाष्यकारस्य प्रमुखशब्दार्थाः तस्य विचाराश्च सम्यवगबोधनोयाः । यथा–'यस्य पुरस्य क्रमेण पृथिव्यन्तरिक्षद्युरूपाश्च' प्राकाराः तथैव 'पृथ्वीवर्ती लौहरूपप्राकारः अन्तरिक्षवर्ती रजतरूपः प्राकारः, द्युलोकवर्ती हिरण्यरूपः प्राकारः—परिखाश्च वर्तन्त इति'[1], पूर्वोक्तानां पृथिव्यादीनां लोहादिस्वरूपाणां परिखानां चित्रं (माडल) यदि वयमभिमुखं स्थापयेम तदास्य रहस्यस्यावगमने सौकर्यं स्यात् । अत्र वैदिक्या दृशा द्यौरन्तरिक्षं पृथिवी, पौराणिकदृष्ट्या स्वर्गमृत्युपातालानि । एतेषां त्रयाणां लोकानां स्थितिगत्याकारविषये वेदादारभ्य साम्प्रतं यावद् बहुशःमतान्तराणि प्रकटितानि यानि प्रायशः परस्परविरुद्धानि । वेदापेक्षया पुराणेषु सिद्धान्तज्योतिषे च एतद्विषयसम्बन्धिनो

## ब्रह्माण्डान्तर्गत-त्रैलोक्यम्

पौराणिकम्[2]




वैदिकम्




---

१. तै० सं० ( सायणभाष्यम् ) १।२।११।५ ।

२. अत्र मध्यस्थानीयो मृत्युलोकः क्वचित् पृथिवीलोकः भूर्लोको वा कथ्यते ।

महत्त्वपूर्णा सामग्री समुपलभ्यते। त्रिलोक्याः स्थितिः उपर्युपरीति क्रमेण स्वीकृता सामान्यरूपेण। यथा--

तथैव एते लोकाः गतिशीलाः अवबुध्यन्ते। लोकत्रय्या मिलिताकारः नारङ्गस्यार्धकपालद्वयसंयोगवद् अस्ति तत्पुरमिति स्वीकुर्वन्ति विभिन्नाः विचारकाः। तत्र त्रैलोक्यस्य सम्मिलितं रूपं ब्रह्माण्डमिति कथ्यते। ईदृशानि सङ्ख्यातीतानि ब्रह्माण्डानि तस्य परमात्मनः प्रतिरोम सन्तीति सर्वविश्रुतं भारतीयानां सनातनं मतम्। तर्हि प्रसङ्गेऽस्मिन्नुल्लिखितं त्रिपुरमप्येवमेव किम्? प्राचीनवायुयानतन्त्रानुसारेण त्रिपुरस्यैकं चित्रं साम्प्रतमुपलभ्यते, यस्मिन्नेकस्यैव वृत्तस्याभ्यन्तरे वृत्तद्वयस्योल्लेखो दरीदृश्यते—




किम् तर्ह्ययमेवाकारो ग्राह्यः अन्यो वा कोऽप्याकारः सम्भाव्यते? वर्णिताकारद्वयस्य स्वीकरणेऽस्माभिः 'खगोलस्य' आकाशवाणीसक्रियविकिरणीयतरङ्गाणां च विज्ञानादिनियमाश्रयणेन विपत्समूहे निमज्जितव्यं स्यात्। एषा विचारपद्धतिः अभिनवैव विस्मयमुत्पादयिष्यति। अत्र केवलजिज्ञासैव प्रकटीकृता, परीक्षितुमनर्हा वयम्। अपरैर्विज्ञानविद्भिः विचारकैः शमयिष्यते यथा कालम्, सुव्यवस्थितया पद्धत्या चिन्तनेन वा समुचितमार्गमुपलप्स्यामहे इति सम्भाव्यते।

मन्मते तु वैदिकस्य त्रिपुरस्याकारः उपर्युक्ताभ्यामाकाराभ्यां पृथक् वर्तते। तैरुक्ताः पृथिव्यादि-लौहादिसंज्ञाः विशेषेणोपमाद्यर्थकाः, न सन्ति वस्तुतः। भाष्यकारेण यल्लोहरजतहिरण्यानाम् उल्लेखः कृतः सः पृथिव्यादीनां वर्णसम्बन्धी अस्ति, स च वक्ष्यमाणभूक्षेत्रखण्डत्रयस्य एव प्रतीयते। एतत्तु सुविदितमेव यद् गिरिगुहाभ्य एव मानवः स्वसभ्यतामारभत। गुहाभ्य एव सः आत्मसंरक्षणं विश्वसिति स्म। पुराणेषु सुमेरुशृङ्गादारभ्य विस्तृतभूमिपर्यन्तं देवासुरमानवानां निवासकथाः श्रूयन्ते। हिमालयतो दक्षिणोत्तरदिग्भागस्थितेषु पर्वतेषु देवानां दानवानाम् (आर्याणामनार्याणां) युद्धप्रसङ्गानां वेदादारभ्य आपुराणकालमुल्लेखः प्राप्यते। इन्द्रस्य शत्रोः शतसहस्रादिशृङ्गयुतानां भेदनं, तत्र तत्र च स्वामित्व स्थापनादिः वेदादिषु सर्वविदित एव। एतेषां दुर्गाणामितिहासं जीवयितं 'गढवाल' इति विख्यातं मण्डलमद्यापि स्वनाम्ना तत्पराक्रममभिनवीकुर्वत् अतितरां

शोभते। प्रातः सूर्योदयवेलायां वयं प्रतिदिनमवलोकयामो यत्तस्मिन्काले पर्वतशृङ्गाणि सुवर्णवत् दृश्यन्ते, तन्मध्यं रजतसमः (श्वेतः), निम्नप्रदेशश्च स्वभावत एवान्धकारमयः लौहसदृशः।

पौराणिकदृष्ट्या सुमेरुशृङ्गं (द्यां) ब्रह्मादयो देवाः, मध्यम् (अन्तरिक्षं) ग्रहनक्षत्राणि सप्तर्षयश्च, अधः विस्तृतभूमिक्षेत्रं (मृत्युलोकं) मानवादिसकलजीवजन्तवोऽधिवसन्ति।

अतः सिद्धयति त्रिपुरमिदं पूर्ववर्णितचित्रद्वयसम्बन्धमभजमानं पर्वतशिखरादारभ्य विस्तृतभूप्रदेश एव नान्यत्किमपि[1]। यथा अधुना काश्यामेव यात्रावर्णने समस्ततीर्थानां देवानां च अन्तर्भावो वर्तते तथैव तत्रापि बोद्धव्यम्।

प्रायः सर्वे जानन्त्येव यत् प्राणिमात्रस्य स्वसंरक्षणं स्वाभाविको धर्मो भवति। तत्र बुद्धिसम्पन्नेन मानवेनापि स्वात्मधनयोः रक्षणपूर्वकं स्वस्य क्रमिकविकासः कृतः। आर्यैः पूर्वजानां[2] प्रेरणया पुराणि निर्माय बुद्धिपुरस्सरेण यज्ञेन (साङ्घिकबलेन) स्वोत्कर्षः सम्पादितः। तैः पुरमाश्रित्यैव राज्यशासनानि सुरक्षितानि।

**ध्वजः—**

ध्वजति गच्छतीति ध्वजः। पत्यते योधादिरनया सा पताका राष्ट्रस्य राज्यस्य समाजस्य संस्कृतेः सभ्यतायाश्च सूचको ध्वजो भवति। ध्वजान्तर्गतेन चिह्नेन वर्णेन आकारादिना च तत्तद्राज्यादीनां परिचयो जायतेऽनायासेन। अयं ध्वजो वेदमूलको वर्तते। वेदेष्वस्य विपुलान्युदाहरणानि लभ्यन्ते। प्रायो युद्धवर्णनशत्रुनाशनादिसूक्तेषु ध्वजस्य वर्णनं लभ्यते। यथा—'ईशां वो वेद राज्यम्'[3] अत्रारुणैः केतुभिः सह वीराणां परिचयो वर्तते। ध्वजार्थं केतुद्रप्सयोरप्युल्लेखोऽस्ति। ऋग्वेदत एव ध्वजस्य स्पष्टमुल्लेखः—

स्पर्धन्ते वा उ देवहूये अत्र येषु ध्वजेषु दिद्यवः पतन्ति[4]।
अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु[5]।

यद्यपि 'द्रप्स' शब्दः विविधेषु स्थलेषु सोमदध्यादीनां लघुस्थूलादिबिन्दूनां सूचकोऽस्ति बहुमतेन, तथापि ऋग्वेदस्य स्थलद्वयमवलोक्य 'राथ' महोदयेनास्यार्थो[6] ध्वजः कृतः।

उत्पत्तिर्विकासो वा—महाभारतादिना[7] विज्ञायते यत् पुरा तालध्वजस्यापि

---

१. आर्यों का आदिदेश मध्य हिमालय पृ० ९७–१०१,
अपि च देवासुर संग्राम और संस्कृति पृ० २२४–२६४।
२. 'यस्याः पुरो देवकृताः' अथर्व १२।१।४२।
३. अथर्व० ११।१०।२।
४. ऋ० ७।८५।२।
५. तत्रैव १०।१०३।११।
६. तत्रैव ४।१३।२; १।६४।२।
७. विराट्प० ५६।२५, शान्तिप० ३४।२, 'ध्वजेषु' अथर्व० १९।१३।११।

प्रयोगोऽभवत्। बलरामस्तु तालध्वजस्यैव प्रयोगमकरोदिति पुराणप्रसिद्धम्। तालस्य तात्पर्यं वर्तते वृक्षः, अर्थात् प्रथमतः वृक्ष एव ध्वजार्थं प्रयुक्तः, तत्र विशेषेण तालवृक्षः स्वीकृतो दैर्घ्यान्। पश्चात् तद्वृक्षस्योर्ध्वभागं छित्त्वा तस्य दण्डस्य ध्वजदण्डे प्रयोगोऽभवदित्यनुमीयते।

ध्वजस्योपयोगः सैन्ये शिविरे राजयात्रायामभियाने तथा राष्ट्रियसामाजिकधार्मिकाद्युत्सवेषु च भवति। ध्वजे नेतृत्वशक्तिरानुशासनिकी शक्तिः सङ्घशक्तिश्च सुविद्यमाना वर्तते, वीराणामयं प्रेरकश्च।

आर्याणां ध्वजस्य परम्परागतो वर्णो रक्त आसीदित्यनुमीयते। यतो हि पदे पदे 'अरुणैः केतुभिः सह' इति वाक्यं श्रूयते वेदेषु। ध्वजश्चतुष्कोणाकारः, पताका च त्रिकोणाकारा भवति[1]। ध्वजमध्ये कस्यचिच्चिह्नस्यापि सङ्केतो लभ्यते। यथा—

एता देवसेनाः सूर्यकेतवः सचेतसः।
अमित्रान्नो जयन्तु स्वाहा[2]॥

रामायणेऽपि सूर्यचिह्नाङ्कितस्य ध्वजस्य वर्णनं लभ्यते। सम्भवतोऽशोकेनाप्यस्यैव सूर्यचिह्नस्याधारेण स्वराष्ट्रस्य चक्रचिह्नं स्वीकृतम्। कर्मकाण्डे दशदिक्पालपूजने सायुधाङ्कितध्वजपताकयोः पूजनं विहितम्[3]। अद्यापि विविधेषु राष्ट्रध्वजेषु चिह्नानि दृश्यन्ते।

वेदेषु राष्ट्रियध्वजव्यतिरिक्तो जनध्वजोऽपि लिखितो, यथा—

स नो महाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः।
धिये वाजाय हिन्वतु॥
स रेवांइव विश्पतिर्दैव्यः केतुः शृणोतु नः।
उक्थैरग्निर्बृहद्भानुः[4]॥

१. प्राचीन भारत की सांग्रामिकता, पृ० १९५। २. अथर्व० ५।२१।१२।
३. कुण्डमण्डपसिद्धि—कुण्डार्कादिपुस्तकेषु। ४. ऋ० १।२७।११-१२।

# तृतीयोऽध्यायः

## राज्यविभागाः—वेददिशा

पूर्वोक्ते राज्यप्रकरणे मूर्तिमत्त्वसिद्धान्तान्तर्गतराज्याङ्गस्य परिचयोऽस्माभिः प्राप्तः। एवमेव प्रकृतिशब्दस्यापि विचारः ग्रन्थेषु लभ्यते। मनोरनुसारेण प्रकृत्यङ्गयोर्भेदो नास्ति[1]। अस्मिन् विषये विद्वद्भिर्विचारः कृतः। इमान् विचारानवलोक्यानुमीयते यद् राज्यशासनस्य विषयेऽपि सुव्यवस्थितराज्यसञ्चालनार्थं स्वच्छन्दराज्ञः नियन्त्रणार्थञ्च यैश्चिन्तनशीलैर्नीतिज्ञैः समये समये प्रकृत्यङ्गमन्त्रिपरिषदादीनामधिकारिणां स्थापना कृता तस्याः मूलाधारो वेद एव।

राज्याधिकारिणः—वेदे विषयस्यास्य परिपोषिका सामग्री लभ्यते। तत्र जातकर्ममेधाजननोपनयनायुष्कामाद्यर्थकाः विविधाः प्रयोगाः निरूपिताः 'अहं रुद्रेभिः'[2] इत्यष्टर्चं सूक्तमवलम्ब्य। सूक्तमिदं दार्शनिकनैतिकसामाजिकादिविषयोपकारकम्। यद्यपि सूक्तस्य वर्णनं सामान्यतः दैवतं द्योतते, परं राजनीतिकदृष्ट्या विचारे कृते सति सूक्तगतरुद्रवसुराष्ट्रीसङ्गमनीजनादीनां शब्दानां सम्यगर्थसङ्गतिः राज्याङ्गस्य प्रकृतेर्विभागानां वोपजीव्या विज्ञायते यत्र सामाजिकोत्क्रान्तेः लोकतन्त्रस्य च तत्त्वानि सन्ति। तदेव क्रमेण विविच्यते।

सर्वजगत्कल्पनास्पदं सच्चित्सुखात्मकं परं ब्रह्म स्वात्मत्वेन विदुषी अम्भृणाख्यस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मवादिनी स्वात्मानं सर्वात्मभावेन तुष्टाव। इति। अत्र प्रसङ्गानुसारेणास्याः ब्रह्मवादिन्याः शासनसञ्चालकत्वं राष्ट्रशक्तिविशेषयुक्तत्वञ्चाप्यनुभूयते। यथा—

---

१. स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा।
सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते॥—मनुः ९।२९४।
मेधातिथिः—स्वामी–राजा, अमात्यः–मन्त्री, पुरोहितः, सेनानी च। पुरम्–निवासनगरम्। राष्ट्रम्–जनपदाः, कोशः–रूप्यसुवर्णादिधनसञ्चयः, हस्त्यश्वरथपदातयश्च, दण्डः–धर्मदण्ड इव। सुहृत्–समानकार्यः, यथोक्तं मित्रं तस्मादनन्तरम्। एताः राज्यस्य प्रकृतयः यथा घटस्य कपालादयः।
प्रकृतयः—'अमात्यराष्ट्रदुर्गाणि कोशो दण्डश्च पञ्चमः।
एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः॥—का०नी०सा० ८।४।
शुक्रमतानुसारेण दश प्रकृतयः—पुरोहितप्रतिनिधिप्रधानसचिवमन्त्रिप्राड्विवाकपण्डितसुमन्त्रामात्यदूताः। केषांचिन्मतेन पुरोहितदूतौ सन्त्यज्य केवलमष्टावेव वर्तन्ते। ( द्र० हिन्दूराज्यशास्त्र पृ० १२७ अस्य लेखकेनामात्यप्रकरणेऽपि विषयस्यास्य सम्यग् विचारः कृतः।

२. अथर्व० ४।३० ऋ० १०।१२५।

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥ १ ॥

अहम् रुद्रैः वीरैः, वसुभिः धनिकैः, आदित्यैः प्रकाशकैर्विद्वद्भिश्च, विश्वेदेवैः गणशो वर्तमानैर्वसुरुद्रादित्यव्यतिरिक्तैः सर्वज्ञैः, मित्रावरुणा सुहृज्जनैर्वरिष्ठैश्च, इन्द्राग्नी ब्रह्मक्षत्रात्मकेन बलेन, उभा अश्विनौ चिकित्सास्वास्थ्याधिकारिभ्याम् इत्थमष्टाभिरधिकारिभिः सह चरामि। स्पष्टत एते राष्ट्रस्य राज्यस्य मुख्याधिकारिण एव। अत्र राष्ट्रशब्द एव मुख्यः परं प्रसङ्गानुसारेणास्य 'राज्यम्' इत्यर्थोऽपि समीचीनः प्रतिभाति।

( क ) तत्र क्रमेण 'रुद्रः' (वीरः) पूर्वम् उक्तः, यः राष्ट्रस्य बाह्याभ्यन्तररक्षाविभागेन सह संयुज्यते, यस्य एकादश सहकारिणः विविधेषु स्थलेषूपयुज्यन्ते। अनेन व्यज्यते यद्वैदिके राष्ट्रे सेनाया प्रामुख्यमासीत्। तथा च यत्र राष्ट्रस्य जलस्थलनभ-आदिक्षेत्रेषु गणशः विभक्तानां विविधानां कुशलसैनिकानामेकः मुख्याधिकारी भवति स्म।

( ख ) 'वसु' शब्देन राष्ट्रस्य समस्तार्थविभागस्य सङ्केतो लभ्यते। अयमष्टसु सङ्ख्यासु विभज्याकरकृषिनदीसमुद्रादिना सम्बद्धानां व्यापाराणां प्राप्तिस्थानानां सूचको भवेत्।

( ग ) 'आदित्य' शब्देन राष्ट्रस्य ज्ञानविज्ञानाभ्यां सम्बद्धस्य विभागस्य सङ्केतो लभ्यते। अयं स्वस्मिन् द्वादशधा विभक्तः, विश्वेदेवमित्रावरुणेन्द्राग्निभिः सम्बद्धश्च सन् राष्ट्रसमाजयोः सम्यक् कार्यपरिपूरणार्थं प्रतिक्षेत्रं स्वबुद्धिशौर्यादिशक्तिबलेन संचरति। विभागेऽस्मिन् विचारसङ्ग्रहणस्य नीतिनिर्धारणस्य विधिनिर्माणस्य च योजनायाः गृहस्य दूतावासादिमन्त्रालयस्यान्तर्भावः कर्तुं शक्यते।

( घ ) 'विश्वेदेवैः' इत्यनेन विविधराजनयिकगणाः सूच्यन्ते। शब्दोऽयमादित्येन सह सम्बद्धः।

( ङ ) 'मित्रावरुणौ' अत्र मित्रः, राज्याङ्गान्तर्गतसुहृदस्तथा च शासनान्तर्गतवरुणस्याधिकारिविशेषस्य सहयोगोति विज्ञायते। वरुणस्तु प्रसिद्धः ऋतप्रकरणे व्याख्यातः।

( च ) 'इन्द्राग्नी' अत्र देवताद्वयं ब्रह्मक्षत्रयोर्बुद्धिशौर्ययोः शक्तेर्बलस्य च सूचकम्, यस्यान्तर्भावः सप्ताङ्गान्तर्गते बले भवति।

( छ ) 'अश्विनौ' पदमिदं स्पष्टतः स्वास्थ्यविभागं सूचयति। तथैवात्र पूर्वोक्तेनाग्नीत्यादिना चातुर्वर्ण्यमपि सूच्यते। यद्यपि मन्त्रेऽस्मिन् रुद्रवस्वादित्यविश्वेदेवैः सह चरामि तथा च मित्रावरुणेन्द्राश्विभिः सह बिभर्मि क्रियारूपं वर्तते। एवमेव मित्रावरुणौ इन्द्राग्नी अश्विनौ चेति पदानि युग्मानि सन्ति। गणनया एते (रुद्रादयश्चत्वारः मित्रावरुणादयस्त्रयः) सप्तसङ्ख्यकाः सन्ति। अस्य सर्वस्य

किमपि विशिष्टं तात्पर्यं स्यात् यस्य विचारः विद्वांसः करिष्यन्ति। इदानीं चरामि बिभर्मि इति क्रिययोर्विचारं विहाय केवलं राज्यसञ्चालनार्थं रुद्रादीनां शब्दानामुपयोगं मत्वा सामान्यविचारः पुरः स्थापितः।

इत्थं प्रथममन्त्रस्य विचारो जातः। अग्रे (द्वितीयमन्त्रतः अष्टममन्त्रं यावत्) अवशिष्टमन्त्राणां सङ्क्षेपेण विचारः क्रियते।

अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम्।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तः॥ २॥

अहं राष्ट्री नियन्त्री वसूनां धनानाम्। संगमनी संगमयित्री, प्रापयित्री। चिकितुषी ज्ञानवती, साक्षात्कृतवती। यज्ञियानां यज्ञार्हाणां देवानाम्। प्रथमा मुख्या। तादृशीं माम्। भूरिस्थात्राम् राष्ट्रस्य बहुषु स्थानेषु स्थिताम्। भूरि बहुलं फलम्। आवेशयन्तः उपासकान् प्रापयन्तः। देवाः विद्वांसः। मामेव धारयन्तीति। अनेन सूच्यते यद्यत्र भूभागे मुख्यत्वेन धनप्राचुर्यं भवति तदेव राष्ट्रं नाम।

अहमेव स्वयमिदं वदामि जुष्टं देवानामुत मानुषाणाम्।
यं कामये तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्॥ ३॥

अहमेव वदामि यदहं देवैः मनुष्यैश्च सेविता। सर्वे मामेव राष्ट्रशक्ति धारयन्ति। अहं यं यं पुरुषं रक्षितुं वाञ्छामि तं तं कृत्स्नं पुरुषं सर्वेभ्योऽधिकं दुष्प्रधर्षं करोमि। यद्वा उग्रः ईश्वरः। तादृशं करोमि। तं स्रष्टारं करोमि। तमेवातीन्द्रियार्थदर्शिनं करोमि। शोभनप्रज्ञं चापि करोमि। सर्वमहमेव निर्वहामि करोमि च सङ्घत्वेनेति भावः।

मया सोऽन्नमत्ति यो विपश्यति यः प्राणति य ईं शृणोत्युक्तम्।
अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धेयं ते वदामि॥ ४॥

अस्मिन् राष्ट्रे यः पुरुषः यदन्नमत्ति पश्यति शृणोति च। यद् यत् करोति स ममैव प्रभावः। ये मां न जानन्ति ते मामवमन्यमानाः मद्विषयज्ञानरहिताः विनश्यन्ति। ममेदं वाक्यं श्रद्धया शृणुत। अनेनैव युष्माकं कल्याणं सम्भवमिति। अत्र मन्त्रस्थं 'ईम्' इति पदं 'ऐं' इति रूपेणागमपरम्परायां दृश्यते। इदं वैदिकं वाग्बीजं वर्तते।

अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश॥ ५॥

ब्राह्मणानां द्वेष्टुः तथा च घातकस्य दुष्टस्य त्रिपुरनिवासिनः असुरगणस्य विनाशाय अहमेव वीराणां हस्ते धनुः आततज्यं करोमि। अहमेव स्तोतृजनानां संरक्षणार्थं सङ्गमं करोमि। मयैव सर्वं द्यावापृथिव्यात्मकं महद् राष्ट्रं व्याप्तमिति।

अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम्।
अहं दधामि द्रविणा हविष्मते सुप्राव्या यजमानाय सुन्वते ॥ ६ ॥

अहमेव सोमम् ओषधिवनस्पतिकृष्यन्नादीनि करोमि। तथैव त्वष्टारं देवशिल्पिनं राष्ट्रस्य प्रतिभागं गृहनगरादिनिर्मातारम्, स्थापत्यकलादिषु कुशलम्, पूषणं सर्वतोभावेन पोषणकर्तारम्, भगम् कल्याणप्रदातारम् अधिकारिविशेषं च राष्ट्रार्थं धारयामि। मद्यजनकर्त्रे यजमानाय स्वाधिकारकर्तव्यपूर्वकराष्ट्रभक्तिसम्पादकाय याज्ञिकाय यागफलरूपं धनं प्रयच्छामि।

अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वन्तः समुद्रे।
ततो वि तिष्ठे भुवनानि विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥ ७ ॥

अहमेवास्य राष्ट्रस्योपरिभागे शासनसूत्रसञ्चालकं पितरं जनयामि। सङ्घीभूय राष्ट्रोद्धारकार्यार्थं सप्रयत्नमुत्पन्नाहं राष्ट्रस्य प्रतिक्षेत्रं चरामि। सर्वं नियन्त्रयामीति।

अहमेव वातइव प्र वाम्यारभमाणा भुवनानि विश्वा।
परो दिवा पर एना पृथिव्यैतावती महिम्ना सं बभूव ॥ ८ ॥

राष्ट्रस्य सर्वान् विभागान् सृजामि। सर्वत्र सञ्चरामि। इदमेव मम माहात्म्यम्।

इत्थं विचारेण विज्ञायते यद् वैदिकं राष्ट्रं सुसम्पन्नं सर्वाङ्गपरिपूर्णं सम्यगनुशासितं चासीत्। यत्र सर्वे पृथग् भूत्वापि बृहत्समाजराष्ट्रयोः सम्यक्तया कार्यपूरणार्थं सञ्चालनार्थं च निमित्तरूपेण सर्वनियन्त्रीं राष्ट्रशक्तिविशेषमभजन्त। येनाङ्गाङ्गिभावमाश्रित्य स्वाधिकारकर्तव्ययोः पालने राष्ट्रं समृद्धं संरक्षितं चासीत्।

उपर्युक्तानां रुद्रवस्वादीनां वर्तमानशासनपद्धत्या सह तुलनात्मको विचारः कर्तुं शक्यते। येन राज्याङ्गप्रकृति-विभागप्रमुखादिशब्दानामपि समन्वयो भवेत् इत्यधिकृत्य अधः सूक्तगत-विभागाधिकारिणां संक्षिप्ता तालिका पुरः स्थाप्यते—

| अधिकारिणः | अर्थाः | विभागाः |
|---|---|---|
| १. रुद्राः | वीराः राजभटाः प्रहरिणः | सुरक्षाविभागः |
| २. वसुः | धनिकः | अर्थविभागः |
| ३. आदित्यः | प्रकाशकः | गुप्तचरविभागः |
| ४. विश्वेदेवाः | गणाः सामान्यकर्मचारिणश्च | जनप्रशासनविभागः |
| ५. मित्रः | सुहृद्, विद्वांश्च | उपप्रधानप्रशासनविभागः |
| ६. वरुणः | प्रधानप्रशासकः | विधिन्यायगुप्तचरविभागः |
| ७. इन्द्रः | शूरः क्षत्रियो राजा च | राज्यविभागः |
| ८. अग्निः | ज्ञानी वक्ता पुरोहितो नेता च | प्रधानमन्त्रालयविभागः |
| ९. अश्विनौ | वैद्यौ | स्वास्थ्यविभागः |
| १०. त्वष्टा | शिल्पी अभियन्ता च | सार्वजनिकनिर्माणविभागः |

| | | |
|---|---|---|
| ११. पूषा | पोषणकर्ता | खाद्यविभागः |
| १२. सोमः | आह्लादकः मदप्रतीकःओषधयश्च | कृषिविभागः |
| १३. भगः | कल्याणकर्ता | समाजकल्याणविभागः |

## रत्निनः—

उपर्युक्तप्रकृत्यङ्गान्तर्गतं यस्यामात्यस्य परिगणनं वर्तते सः वेदे रत्नीति नाम्ना लभ्यते। अत्र मन्वादिभिरुक्ते सप्ताङ्गे प्रायः राज्ञोऽनन्तरममात्यस्य स्थानमायाति। यद्यप्यस्मिन् विषये विभिन्नैर्लेखकैः राष्ट्रस्य राज्ञो वा प्रथमं, कोषबलयोश्च द्वितीयं स्थानं स्वीकृतमस्ति[1]। परं राज्ञः पूर्वं राष्ट्रस्यैव प्रथम स्थानं वेदमूलकं भाति। 'अहं राष्ट्री संगमनो' इत्यादिवचनैरपोदमेव सिद्धं भवति। अस्तु, अग्रे प्रकृतविचारः क्रियते। तत्र मन्वादिभिर्यस्यामात्यस्य मन्त्रिमण्डलस्य वा चर्चा कृता तस्यामात्यस्य मन्त्री पुरोहितः सेनानीश्चेति त्रयः अर्थाः भवन्ति। तस्य सर्वस्य मन्त्रिमण्डलस्यान्तर्भावो वैदिकरत्नि[2]मण्डले भवति।

रत्निशब्दोऽयं राजपरिवाराणां जनानां राज्याधिकारिणाञ्च कृते प्रयुक्तोऽस्ति ये राजसूयावसरे 'रत्नहवि'र्नामकं यज्ञविशेषं कुर्वन्ति स्म। वैदिकग्रन्थेषु रत्निशब्दस्य सूची लभ्यते[3]। यथा तैत्तिरीयसंहितायाम्[4]—ब्रह्मा (पुरोहितः), राजन्यः (राजकुलोत्पन्नः), महिषी (राज्ञः प्रथमा पत्नी, कृताभिषेका), वावाता (प्रेष्ठा राज्ञी), परिवृक्ती (अपुत्रा, भोगार्थी) सेनानी सूतः (पुराणेतिहासज्ञः, सारथिः, कोषाध्यक्षो वा), भागदुघः (राज्यकरग्राहकः, भोजनविभाजको वा), अक्षावापः (अक्षक्रीडाध्यक्षः, चिह्नप्रदायकाध्यक्षः गणनाध्यक्षो वा)।

शतपथानुसारेण[5]—सेनानीः, पुरोहितः, महिषी, सूतः, ग्रामणीः, क्षत्ता (कञ्चुकी), सङ्ग्रहीतकः, भागदुघः, अक्षावापः, गोनिकर्तनः, पालागलः (सन्देशवाहकः), परिवृत्ती।

मैत्रायणीसंहितानुसारेण[6]—ब्राह्मणः, राजा, महिषी, परिवृक्तीः, सेनानीः, सङ्ग्रहीता, क्षत्ता, सूतः, वैश्य-ग्रामणीः, भागदुघः, तक्षरथकारौ, अक्षावापः, गोविकर्तश्च। काठकसंहितायामप्येका[7] सूची लभ्यते। यत्र गोविकर्तन स्थाने 'गोकच्छ' शब्दो लभ्यते।

---

१. हिन्दू राज्यशास्त्र पृ० ३६–७।
२. प्राचीन भारतीय शासनपद्धति वि० द्र० 'मन्त्रिमण्डल' प्रकरणम्। पृ० ११०। तथैव प्राचीन भारत में राज्य और न्यायपालिका पृ० १३, १२७।
३. वैदिककोषः पृ० ४३४।
४. तै० सं० १।८।९।१, तथा च तै० ब्रा० 'रत्निनामेतानि हवींषि भवन्ति' १।७।३।
५. श० ब्रा० ५। अ० ३।१।१–।
६. मै० सं० २।६।५।
७. का० सं० १५।४।

पञ्चविंशब्राह्मणानुसारेण[1]—अष्टविधानां वीराणामेका[2] लघुतरा सूची लभ्यते। यथा भ्राता (राज्ञो भ्राता), पुत्रः, पुरोहितः, महिषी, सूतः, ग्रामणीः, क्षत्ता सङ्ग्रहीता च।

वायुपुराणेऽपि[3] रत्निनां वर्णनं लभ्यते।

मणिः—इत्थं विविधानां सूचीनामध्ययनेन विज्ञायते यत्तैत्तिरीयसंहितायां तथान्येषु ब्राह्मणपुराणादिषु च रत्निनो वर्णनं लभ्यते। अस्य तात्पर्यमिदं नास्ति यदन्यासु संहितास्वस्याभाव आसीदिति। यतोह्यथर्ववेदे राजनिर्वाचनानन्तरं तस्मै राज्ञे राज्याधिकारसूचकचिह्नानि राजकृतो ददति। अत्रेमानिराज यसूचकचिह्नानि मणयोऽभिधीयन्ते। एते मणयः विविधैर्वनस्पतिरसैः सम्पाद्यन्ते स्म, ये आयुरारोग्यै-श्वर्याद्यभिवृद्धयर्थं भवन्ति स्म। अत्रोक्तोऽयं मणिरेव रत्नं वर्तते, यस्योपयोगः कर्तारो रत्निशब्देन कथ्यन्ते स्म। इत्थं रत्निशब्दस्य मूलमथर्ववेद एव सिद्धयति यस्य विकसितरूपं मन्त्रिमण्डलं वर्तते।

## राज्याधिकारसूचकचिन्हधारिणः—

राज्येषु प्रधानशासकानन्तरं राज्यकर्तॄणां पदमासीत्। त एव कालान्तरे रत्निन उच्यन्ते स्म यस्याभिप्रायो वर्तते मणिरत्नादिधारिण इति। एत एव रत्निनः राज्ञे शासनाधिकारप्राप्त्यर्थमिमानि रत्नानि दीयन्ते स्म। आदौ राजा मणिं सर्वेभ्य उपस्थितेभ्यः जनेभ्यः प्राप्नोत्, येषु कर्मकाररथकारादयश्च भवन्ति स्म। वैदिके राजनिर्वाचनेऽयमेव राज्याधिकारसूचकचिह्नप्रदानस्य लाक्षणिको विधिरभूत्।

पर्णस्य मणेर्वा स्वीकारसमये राजा अवोचत् तान् प्रति। तद्यथा सायणानुसारेण—'आयमगन्पर्णमणिः' इत्यनेन सूक्तेन तेजोबलायुर्धनादिपुष्टये पलाशवृक्षमणिं वासितं [4]कृत्वा संपात्य अभिमन्त्र्य बध्नीयात्। तथा च सूत्रम्। 'आयमगन्[5]' 'अयं प्रतिसरः[6]', 'अयं मे वरणः[7]', 'अरातीयोः[8]' इति मन्त्रोक्तान् वासितान् बध्नाति'[9] इति। उक्तो वासितशब्दार्थः, इति।

प्रारम्भे निर्वाचितो राजा एकादशरत्नसंग्राहकाणां गृहं गत्वा एकादश-[10]

---

१. पञ्चविंश ब्रा० १९।१।४।

२. रत्निनां कृते प्रयुक्तोऽयं वीरशब्दः अथर्वमूलकः। यथा 'वीरो वीराय बध्यते', अथर्व० ८।५।१; अयमेव वीरशब्दः बलिशब्देनाप्युच्यते—'बली बलेन'—अथर्व ३।५।१। एवमेव 'वर्चसा' ३।४।१, 'उग्रः' ३।४।२, ३, ४ इत्यादि।

३. द्र० 'प्राचीन भारतीय शासन पद्धति' पृ० ११८।

४. वि० द्र० अथर्ववेद भा० १।९।

५. अथर्व ३।५।

६. तत्रैव ८।५।

७. तत्रैव १०।३।

८. तत्रैव १०।६।

९. तत्रैव कौ० ३।२।

१०. तैत्तिरीये द्वयोश्चरमयोः नामनी न स्तः।

रत्नरूपहवींषि ददाति स्म । रत्नहविर्ग्राहिकाणामेकादशानामयं परिचयः शतपथे[1], तथैव तैत्तिरीयेऽपि[2] लभ्यते ।

परमग्रे गत्वा त एव रत्निनो जना राज्यस्य उच्चपदे अधिकारिपदेन प्रतिष्ठां गताः । अत्रानुमीयते यदेतेषां कर्मचारिणामधिकारिणां वा निर्वाचनपद्धतौ जातिवर्गाणां च प्रतिनिधित्वस्य सिद्धान्त आसीदिति । यतो हि वक्ष्यमाणैः सूक्तैः ( ३।५, ८।५, १०।३, १०।६ ) 'तेजोबलायुर्धनादिपुष्टये पलाशवृक्षमणिं वासितं कृत्वा संपात्य अभिमन्त्र्य बध्नीयात् ।' इति निर्देशः, अतोऽत्र पूर्वोक्तसूक्तस्य[3] भाष्यं ( मुख्यांश एव ) पुरःस्थाप्यते ।

**आयमगन् पर्णमणिर्बली बलेन प्रमृणन्त्सपत्नान् ।**
**ओजो देवानां पय ओषधीनां वर्चसा मा जिन्वत्वप्रयावन् ॥ १ ॥**

अयम् अस्मदादिभिः सम्पदर्थं ध्रियमाणः पर्णमणिः । पर्णः पलाशवृक्षः सोमपर्णभूतत्वात् 'सोयं पर्णः सोमपर्णाद्धि जातः[4]' इति श्रुतेः । आगन् आगच्छतु । किंविधः । बली अतिशयितबलवान् । अभिमतफलं दातुं समर्थ इत्यर्थः । अत एव बलेन स्वकीयेन सामर्थ्यातिशयेन सपत्नान् शत्रून् प्रमृणन् प्रकर्षेण हिंसन् । आगच्छतु इति सम्बन्धः । पुनस्तमेव विशिनष्टि । देवानां इन्द्रादीनाम् ओजः बलरूपः तथा ओषधीनाम् सर्वासां पयः सारभूतः ओषधिसारसोमजन्यत्वात् । एवंलक्षणः पर्णमणिः अप्रयावन् अप्रयावा मां विहाय अनपगन्ता सन् (मा) मां वर्चसा तेजसा जिन्वतु प्रीणयतु । तेजस्विनं करोतु इत्यर्थः ।

**मयि क्षत्रं पर्णमणे मयि धारयताद् रयिम् ।**
**अहं राष्ट्रस्याभीवर्गे निजो भूयासमुत्तमः ॥ २ ॥**

हे पर्णमणे पलाशनिर्मितमणे क्षत्रं बलनामैतत् । बलं क्षत्रियजातिं वा मयि मणिधारके धारयतात् धारय स्थापय । तथा रयिं धनं च मयि धारयतात् । अहं च त्वद्धारणाद् राष्ट्रस्य अभीवर्गे आवर्जने स्वाधीनीकरणे निजः अनन्यसहायः उत्तमः उत्कृष्टतमो भूयासम् । स्वबाहुबलेनैव सर्वं राष्ट्रं वशीकृत्य सर्वश्रेष्ठो भवानीत्यर्थः ।

**यं निदधुर्वनस्पतौ गुह्यं देवाः प्रियं मणिम् ।**
**तमस्मभ्यं सहायुषा देवा ददतु भर्तवे ॥ ३ ॥**

देवाः इन्द्राद्या यम् अभीष्टफलदत्वेन प्रसिद्धम् अत एव प्रियम् प्रियकरं गुह्यं गोपनीयं मणिं वनस्पतौ पलाशवृक्षे निदधुः निहितवन्तः । तम् तथाविधं मणिम् अस्मभ्यं भर्तवे भरणाय आयुषा सह देवाः ददतु प्रयच्छन्तु ।

**सोमस्य पर्णः सह उग्रमागन्निन्द्रेण दत्तो वरुणेन शिष्टः ।**
**तं प्रियासं बहु रोचमानो दीर्घायुत्वाय शतशारदाय ॥ ४ ॥**

---

१. श० ब्रा० ५।३।१ । २. तै० ब्रा० १।७।३ ।
३. अथर्व० भा० ३।५ । ४. तै० ब्रा० १।२।१।६ ।

सोमस्य द्युलोकस्थायाः सोमलतायाः पर्णः, आहरणसमये भूमौ पतितपर्णाद् उद्भूतः। श्रूयते हि 'तृतीयस्याम् इतो दिवि सोम आसीत्। तं गायत्र्याहरत्। तस्य पर्णम् अच्छिद्यत। तत् पर्णोऽभवत्। तत् पर्णस्य पर्णत्वम्'[1] इति। उग्रम् उद्गूर्णं प्रभूतं सहः पराभिभवनक्षमं बलम् उक्तलक्षणबलरूपः एवंलक्षणो मणिः आगन् माम् आगच्छतु। कथंभूतः। इन्द्रेण देवेन दत्तः, वरुणेन शिष्टः[2] अनुशिष्टः अनुज्ञातः। तम् उक्तलक्षणं पर्णमणिं बहु बहुविधं रोचमानः रोचमानम्। मणिं प्रियासं भ्रियासं धारयेयम्। किमर्थम्। शतशारदाय शतसंवत्सरपरिमिताय दीर्घायुत्वाय चिरकालजीवनाय। दीर्घायुत्वायेति पदम् 'दीर्घायुत्वाय बृहते रणाय' (अ० २।४।१) इत्यत्र व्याख्यातम्।

आ मारुक्षत् पर्णमणिर्मह्या अरिष्टतातये।
यथाहमुत्तरोसान्यर्यम्ण उत संविदः॥ ५॥

अयं पर्णमणिः मह्यै महत्यै अरिष्टतातये। रिष्टं हिंसनं तदभावः अरिष्टम्। तत्क्रियायै। मा माम् आरुक्षत् आरोहतु मयि चिरं वर्तताम्। अर्यम्णः। अरीन् यमयतीति अर्यमा अधिकबलः पुरुप्रदाता च। अर्यमा अधिकधनः 'यः खलु वै ददाति सोऽर्यमा[3]' इति श्रुतेः। तस्माद् अधिकात् उत् अपि च संविदः समानज्ञानात्। समबलादित्यर्थः। तस्माद्यथा येन प्रकारेण अहं मणिधारकः उत्तरः उत्कृष्टतरः असानि भवानि। तथा आरुक्षत् इति संबन्धः।

ये धीवानो रथकाराः कर्मारा ये मनीषिणः।
उपस्तीन् पर्ण मह्यं त्वं सर्वान् कृण्वभितो जनान्॥ ६॥

ये धीवानः धीवराः मात्स्यिकाः, बुद्धिमन्तोऽपि। ये च रथकाराः रथनिर्मातारो जातिविशेषाः। उक्तं हि 'रथकारस्तु माहिष्यात् करण्यां यस्य सम्भवः' इत्यमरः। वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः। शूद्रायां वैश्यादुत्पन्ना करणी। ये कर्माराः अयस्कारप्रभृतयः ये च मनीषिणः मनस ईशितारो बुद्धिविशेषोपजीविनः। हे पर्ण तद्धिकारमणे त्वम्। सर्वान् उक्तोपलक्षितान् जनान् मह्यम्। मम अभितः सर्वतः उपस्तीन् सेवार्थं समीपे विद्यमानान् उपासीनान् वा कृणु कुरु। इति। अनेन पर्णमिदं निर्वाचनसूचकचिह्नं प्रतीयते[4]।

ये राजानो राजकृतः सूता ग्रामण्यश्च ये।
उपस्तीन् पर्ण मह्यं त्वं सर्वान् कृण्वभितो जनान्॥ ७॥

ये राजानः अन्यदेशाधिपा राजकृतः राजानं कुर्वन्ति राज्ये अभिषिञ्चन्तीति राजकृतः सचिवाः। सूताः, ब्राह्मण्यां क्षत्रियादुत्पन्नः सूतः तज्जातीयाः सारथ्योपजीविनो वा। ये च ग्रामस्य नेतारः। उपस्तीन् इत्यादि पूर्ववद् योज्यम्।

अत्र ६-७ मन्त्रयोः राज्ञो निर्वाचकानां नामानि सन्ति। यथा—१. धीवराः

१. तै० सं० ३।५।७।१।
२. शासनस्य सर्वोच्चाधिकारिणाऽनुज्ञात इत्यर्थः।
३. तै० सं० २।३।४।१।
४. 'प्राचीन भारत में जनतन्त्र' पृ० ४३।

(बुद्धिमन्तो वा), २. रथकाराः, ३. काष्ठलोहकाराः, ४. मनीषिणः, ५. राजानः, ६. राजकृतः शासकाः, ७. सूताः, ८. ग्रामनेतारः। एते शासनविभागेषु प्रतिष्ठां गताः। अनेन सूच्यते यन्निर्वाचकेषु नदीसमुद्रग्रामपत्तनादीनां प्रतिनिधित्वमासीत्।

अपि चात्र निर्दिष्टं यद् अन्यदेशाधिपाः राज्ञः निर्वाचनं कुर्वन्ति। अनेनेदं ध्वन्यते यदयं निर्वाच्यमानो महाराजः अधिराजः वर्तते। अर्थादेतेषामपेक्षया श्रेष्ठ आसीदिति।

पर्णोऽसि तनूपानः सयोनिर्वीरो वीरेण मया।
संवत्सरस्य तेजसा तेन बध्नामि त्वा मणे॥ ८॥

हे मणे त्वं पर्णोऽसि अमृतमयस्य सोमस्य पर्णविकारोऽसि। अत एव तनूपानः तन्वाः शरीरस्य पाता रक्षितासि। वीरः वीरत्वं वीरेण वीर्यवता मया सयोनिः वीर्यवत्त्वकारणेन समानजन्मासि। तेन उक्तेन कारणेन संवत्सरस्य एतदुपलक्षितकालभेदनिर्वाहकस्य आदित्यस्य तेजसा युक्तं त्वा त्वां बध्नामि धारयामि। त्वदीयतेजोऽवाप्तये धारयामि। इति।

एवमेव कृत्यापरिहरणार्थं शान्तिस्थापनार्थं राज्यादिकामनया च विविधानां पर्णादिमणीनामौदुम्बरादिवृक्षाणां च वर्णनमथर्ववेदे बहुत्र लभ्यते। तत्र तत्र मन्त्रव्याख्याने प्रसङ्गतो वीराणां राज्यसञ्चालकानां च वर्णनं लभ्यते तस्योपयोगः सम्बद्धविषयपरिपोषको भविष्यतीति मत्वा विनियोगपूर्वकं सूक्तमेकं यथानुपूर्वीकं मुख्यांशयुक्तं पुरः स्थाप्यते। यथा—

तृतीयेऽनुवाके पञ्च सूक्तानि। तत्र 'अयं प्रतिसरः' इति सूक्तद्वयम् अर्थसूक्तम् अभिलषितार्थसिद्धयर्थम्। अनेनार्थसूक्तेन दध्नि मधुनि च त्रिरात्रं वासितं तिलकमणिं संपात्य अभिमन्त्र्य बध्नीयात्। सूत्रितं हि—'आयमगन्' (अ० ३, ५), 'अयं प्रतिसरः', 'अयं मे वरुणः' ( अ० १०, ३ ), 'अरातीयोः' ( अ० १०, ६ ) इति मन्त्रोक्तान् वासितान् बध्नाति' ( कौ० स० १९, २२ ) इति।

तथा अस्य सूक्तद्वयस्य कृत्याप्रतिहरणगणे पाठात् शान्त्युदकाभिमन्त्रणहोमादौ विनियोगः इति सूत्रितम् 'अयं प्रतिसरः ( ८।५ ) यां कल्पयन्ति ( १०।१ ) इति महाशान्तिम् आवपते[1]' इति। 'अथ शान्तिकृत्यादूषणैश्चातनैर्मातृनामभिः[2]' इति। 'कृत्यादूषण एव च। चातनो मातृनामा च[3]' इति॥

तथा 'रौद्रीं रोगार्तस्य[4]' इति विहितायां रौद्राख्यायां महाशान्तौ तिलकमणिबन्धने एतत् सूक्तं विनियुक्तम्। तद् उक्तं शान्तिकल्पे 'अयं प्रतिसरः' इति मन्त्रोक्तं रौद्रयाम्[5]' इति॥ पिष्टरात्रीविधाने प्रतिसरबन्धनेऽपि एतत् सूक्तम्। 'अथातः पिष्टरात्र्याः कल्पं व्याख्यास्यामः' इति उपक्रम्य उक्तम् अथर्वपरिशिष्टे—'अयं प्रतिसरम् आबध्य[6]' इति॥

---

१. कौ० सू० ३९।७। २. शा० क० १६?
३. शां० क० २३।१। ४. शां० क० १७।३।
५. शां० क० १९।५। ६. अप० ६।१।१९।

**अयं प्रतिसरो मणिर्वीरो वीराय बध्यते।**
**वीर्यवान्त्सपत्नहा शूरवीरः परिपाणः सुमङ्गलः[1] ॥ १ ॥**

अयं तिलकवृक्षनिर्मितो मणिः प्रतिसरः प्रतिसरणसाधनः। यः कृत्याः करोति तं प्रति सरतीति प्रतिसरः तादृशः। वीरः विविधम् ईरयति अपसारयति शत्रुप्रभृतीनि इति वीरः, वीराय वीर्याय वीर्याख्याय सामर्थ्याय विक्रान्ताय पुरुषाय वा बध्यते। मणिर्विशेष्यते। वीर्यवान् वीरस्य कर्म वीर्यम् तद्वान् अतिशयितवीर्यः। सपत्नहा शत्रुघातकः। शूरवीरः शूरान् वीरयति सङ्ग्रामे इति वा शूरश्चासौ वीरश्चेति वा शूरवीरः। परिपाणः परिपात्यनेन साधनेन प्रयोक्ता यजमानम् इति परिपाणः परिरक्षासाधनभूतः परितो रक्षिता वा।

**अयं मणिः सपत्नहा सुवीरः सहस्वान् वाजी सहमान उग्रः।**
**प्रत्यक्कृत्या दूषयन्नेति वीरः ॥ २ ॥**

अयं स्राक्त्यो[2] मणिः सपत्नहा वैरिघातकः सुवीरः शोभनैर्वीरैरुपेतः। पुत्रादिप्रदातेत्यर्थः। सहस्वान् बलवान् वाजी वेजनवान् सहमानः शत्रूणाम् अभिभविता उग्रः उद्गूर्णबलः कृत्याः परोत्पादिताः प्रत्यक् कर्त्रभिमुखम् दूषयन् विनाशयन् एति गच्छति बाहुदण्डम् आरोहति। अथवा प्रत्यक् अस्मदभिमुखम् एति वीरः विविधम् ईरयिता शत्रूणाम्।

**अनेनेन्द्रो मणिना वृत्रमहन्ननेनासुरान् पराभावयन्मनीषी।**
**अनेनाजयद् द्यावापृथिवी उभे इमे अनेनाजयत् प्रदिशश्चतस्रः ॥ ३ ॥**

अनेन स्राक्त्येन मणना पूर्वं इन्द्रः वृत्रम् असुरम् अहन् केनापि उपायेन जेतुमशक्यमपि अमुं मणिं बद्ध्वा तत्सामर्थ्येन हतवान् तथा अनेनैव मणिना मणिबन्धनसामर्थ्येन मनीषी जयोपायज्ञानवान् इन्द्रः असुरान् अन्यान् पराभावयत् पराभूतान् विनष्टान् अकरोत्। किञ्च अनेनैव मणिना इमे प्रसिद्धे उभे द्यावापृथिव्यौ अजयत्। द्यावापृथिव्योर्विजयो नाम तदाधिपत्यम् किञ्च अनेनैव मणिना चतस्रः प्रदिशः प्रकृष्टा दिशः प्रागाद्याः अजयत् स्वाधीनाः कृतवान्।

**अयं स्राक्त्यो मणिः प्रतीवर्तः प्रतिसरः।**
**ओजस्वान् विमृधो वशी सो अस्मान् पातु सर्वतः ॥ ४ ॥**

अयं स्राक्त्यः तिलकविकारो मणिः प्रतीवर्तः प्रतिकूलं प्रतिमुखम् वर्तयत्यनेनेति प्रतीवर्तः प्रतिसरः रोगादेः प्रतिसरणसाधनभूतः ओजस्वान् शत्रुनिरासक्षमतेजोयुक्तः विमृधः विगतसङ्ग्रामः मणिधारकदर्शनेनैव शत्रूणां पलायनात् सङ्ग्रामस्यैव

---

१. अथर्व० ८।५ सूक्तस्य क्रमेण मन्त्राः।

२. अथर्ववेदे ( २।११।२ ) स्रक्त्यशब्दः मण्यर्थकः। सायणानुसारेण स्रक्त्यस्यार्थः तिलकवृक्षभवः इति। एवमेव स्राक्त्यशब्दः रक्षाकवचार्थकः। वेबरानुसारेणाऽयं बहुकोणीयो स्फटिकः। द्र० वै० को० पृ० ५८४; अपि च तत्र भाष्ये द्वितीयकाण्डस्यैकादशसूक्तस्य प्रारम्भे विविधाभिचारप्रयोगेषु कौशिकेन निर्देशितानां सूक्तानां प्रस्तुतप्रसङ्गेऽप्युपयोग इत्यवगन्तव्यम्।

अभावात्। विमृधो विमर्दयिता वा। वशी सर्वस्य वशयिता एतादृशो मणिः अस्मान् सर्वतः सर्वस्माद् अभिभवात् पातु रक्षतु।

तदग्निराह तदु सोम आह बृहस्पतिः सविता तदिन्द्रः।
ते मे देवाः पुरोहिताः प्रतीचीः कृत्याः प्रतिसरैरजन्तु ॥ ५ ॥

तत् वक्ष्यमाणं प्रतीचीः कृत्या इत्यादिकम् अग्निर्देवो मे आह उक्तवान्। प्राणिनः प्रतिसरैः प्रतिसरणसाधनैर्मणिभिः कृत्याः प्रतीचीः अजन्ति इत्येतत् मे मह्यम् अस्माकम् अग्निराहेत्यर्थः तदु तदेव सोमोऽप्याह। एवं बृहस्पतिः बृहतो मन्त्र-जातस्य स्वामी एतन्नामको देवोऽप्याह। तथा सविता सर्वप्राणिनां प्रेरकः एतन्नामको देवोऽप्याह। किं बहुना, तत् साधनम् इन्द्रः मे आह। ते प्रसिद्धा अन्येऽपि देवाः पुरोहिताः पुरतः सन्निधापिताः पुरोहितवत् हितकारिणो वा। आहुरिति विपरिणामः कर्तव्यः। अथवा तत् स्राक्त्यमणिबन्धनस्य सर्वसम्पत्-साधनत्वम् अग्निराह। तदु तद् एव सोमोऽप्याह। एवं बृहस्पत्यादिष्वपि योज्यम्। ते ये अग्न्यादयो मणेः सर्वफलसाधनत्वम् आहुः त एव पुरोहिताः फलनिष्पादन-विषये पुरतः स्थापिताः सन्तो मे मदर्थम् अन्यैरुत्पादिताः कृत्याः प्रतिसरैः फल-साधनत्वेन अभिहितैर्मणिभिः साधनैः प्रतीचीः अजन्तु गमयन्तु इति व्याख्येयम्।

अन्तर्दधे द्यावापृथिवी उताहरुत सूर्यम्।
ते मे देवाः पुरोहिताः प्रतीचीः कृत्याः प्रतिसरैरजन्तु ॥ ६ ॥

ये स्राक्त्यं मणिं जना वर्माणि कृण्वते।
सूर्य इव दिवमारुह्य वि कृत्या बाधते वशी ॥ ७ ॥

ये जनाः कृत्यापरिहारार्थिनो मनुष्याः स्राक्त्यं मणिं वर्माणि तनुत्राणि कृण्वते कुर्वते। स मणिः सूर्य इव दिवम् आरुह्य दिवम् आरूढः सूर्यो यथा तमांसि बाधते एवं वशी वशयिता सन् कृत्याः अन्योत्पादिता वि बाधते विशेषेण नाशयति।

स्राक्त्येन मणिना ऋषिणेव मनीषिणा।
अजैषं सर्वाः पृतना वि मृधो हन्मि रक्षसः ॥ ८ ॥

अहं साधकः स्राक्त्येन तिलकवृक्षविकारेण मणिना मनीषिणा विपश्चिता ऋषिणेव अतीन्द्रियार्थद्रष्ट्रा अथर्वाख्येन महर्षिणा यथा तथा। अथवा ऋषिर्मन्त्रः। उक्तरूपेण मन्त्रेणेव यथा तथा सर्वाः पृतना अजैषम् जितवान् अस्मि जयानि वा। तथा मृधः प्रमाथिनो रक्षसः राक्षसान् स्राक्त्येन मणिनैव वि हन्मि घातयामि।

याः कृत्या आङ्गिरसीर्याः कृत्या आसुरीर्याः
कृत्याः स्वयंकृता या उ चान्येभिराभृताः।
उभयीस्ताः परा यन्तु परावतो नवतिं नाव्या अति ॥ ९ ॥

आङ्गिरसीः आङ्गिरस्यः अङ्गिरसा प्रयुक्ता याः प्रसिद्धाः कृत्याः सन्ति। अङ्गिरसो महर्षेः कृत्याप्रयोगविघातृत्वम् अङ्गिरसकल्पाख्यसूत्रनिर्माणादेव प्रसिद्धम्। तथा आसुरीः आसुर्यः असुरैर्निर्मिता याः कृत्याः सन्ति। एवं स्वयंकृताः परार्थप्रयोगे सति केनचिद् वैकल्येन स्वस्मिन्नेव पर्यवसिताः स्वयंकृताः इत्युच्यन्ते। स्वस्मिन्नेव

कृत्यापर्यवसानम् 'यथेन्द्रशत्रुः स्वरतोऽपराधात्[1]' इत्यादिषु प्रसिद्धम्। या उ च याः काश्चन अन्येभिः अन्यैर्मत्सरिभिः आभृताः आहृताः प्रयुक्ताः कृत्याः सन्ति ता उक्तरूपा उभयीः उभय्यः उभयप्रकारा अपि परावतः दूरदेशात् परा यन्तु परा गच्छन्तु। ननु चतुष्प्रकारा निर्दिष्टाः कथम् उभयविधत्वम् इति चेद् उच्यते। आङ्गिरस्यः आसुर्यश्च अमानुष्यः इति एका कोटिः। स्वयंकृता अन्यैः कृताश्च मानुष्यः इत्यपरा इत्युभयविधत्वम्। परागमनस्य अवधिं दर्शयति नवतिम् इत्यादिना। नाव्याः नावा तार्या महानद्यः। ताश्च नवतिसंख्याकाः। ता अति अतिक्रम्येत्यर्थः।

**अस्मै मणिं वर्म बध्नन्तु देवा इन्द्रो विष्णुः सविता रुद्रो अग्निः।**
**प्रजापतिः परमेष्ठी विराड् वैश्वानर ऋषयश्च सर्वे॥ १०॥**

अस्मै यजमानाय कृत्यापरिहारादिफलकामाय मणिं स्राक्त्यं वर्म परकृतकृत्यादिप्रहारपरिहारकं कवचं तत्स्थानीयं कृत्वा देवाः बध्नन्तु। के देवास्तान् विशिनष्टि इन्द्रो विष्णुरित्यादिना। प्रजापतिः प्रजानां स्रष्टा स च परमेष्ठी परमे निरतिशये स्थाने वर्तमानः विराट् कृत्स्नब्रह्माण्डाभिमानी देवः वैश्वानरः विश्वेषां नराणां हितो जाठरोऽग्निः हिरण्यगर्भो वा। स्पष्टम् अन्यत्।

**उत्तमो अस्योषधीनामनड्वान् जगतामिव व्याघ्रः श्वपदामिव।**
**यमैच्छामाविदाम तं प्रतिस्पाशनमन्तितम्॥ ११॥**

हे मणे मण्युपादान वृक्ष वा त्वम् उत्तमोऽसि सर्वाभिमतफलसाधनत्वेन कतिपयफलसाधिकानाम् ओषधीनां मध्ये श्रेष्ठोऽसि। उत्तमत्वे दृष्टान्तमाह—अनड्वान् अनोवहनसमर्थः पुंगवो जगतामिव गच्छतां चतुष्पदां मध्ये यथा उत्तमस्तद्वत्। अनडुह उत्तमत्वम् 'अनड्वान दाधार पृथिवीम्[2]' इत्यत्र प्राग् उक्तम्। उपकारकत्वे दृष्टान्तम् अभिधाय शत्रुहिंसादिक्रूरकर्मणि दृष्टान्तमाह। व्याघ्रः श्वपदामिवेति। श्वपादः वृकसृगालाद्या अरण्यदुष्टमृगाः। तेषां मध्ये व्याघ्र इव। व्याघ्रो व्याघ्राणाद् व्यादाय हन्तीति वेति यास्कः[3]। यम् ईदृग्विधं सर्वपुरुषार्थसाधनाय ऐच्छाम तम् अविदाम लब्धवन्तः स्मः। अथवा यं त्वया साध्यं पुरुषार्थम् ऐच्छाम तम् अविदाम। तं विशिनष्टि प्रतिस्पाशनम् अभिचरतः प्रतिमुखं बाधकम्। अन्तितम् अत्यन्तसंनिहितम्। अथवा तं तमेव प्रतिकूलं बाधनावन्तं द्वेष्टारम् अन्ति अन्तिके अविदाम।

**स इद् व्याघ्रो भवत्यथो सिंहो अथो वृषा।**
**अथो सपत्नकर्शनो यो बिभर्तीमं मणिम्॥ १२॥**

उपमा प्रधाना व्याघ्रादिनिर्देशाः। व्याघ्र इव सिंह इव च पराभिभवनशीलो भवति स इत्। स एवेत्यर्थः। अथो अपि च वृषा इव स यथा गोषु स्वच्छन्द-

---

१. पा० शि० ५२। २. अथर्व० ४।११।
३. नि० ३।१८।

सञ्चारी भवति तद्वत् स भवतीत्यर्थः। अथो अपि च स एव सपत्नकर्षणः शत्रुविनाशकश्च भवति। स इत्युक्तम्। क इत्याह—यः पुरुषः इमम् उक्तमहिमोपेतं मणिं बिभर्ति धारयति स इद् इति सम्बन्धः।

नैनं घ्नन्त्यप्सरसो न गन्धर्वा न मर्त्याः।
सर्वा दिशो वि राजति यो बिभर्तीमं मणिम्॥ १३॥

सर्वा दिशः प्रति। सर्वासु दिक्ष्वित्यर्थः। वि—राजति। सर्वदिक्स्वामी भवतीत्यर्थः। स्पष्टम् अन्यत।

कश्यपस्त्वामसृजत कश्यपस्त्वा समैरयत्।
अबिभस्त्वेन्द्रो मानुषे बिभ्रत् संश्रेषिणेजयत्॥
मणिं सहस्रवीर्यं वर्म देवा अकृण्वत॥ १४॥

कश्यपः प्रजापतिः हे मणे त्वाम् असृजत सृष्टवान्। अनेन जन्मतः प्राशस्त्यम् उक्तम्। तथा स एव कश्यपः त्वा त्वां समैरयत् सर्वोपकारकत्वाय प्रेरितवान्। अनेन प्रयोक्तृगौरवद्वारा प्राशस्त्यम् उक्तं भवति। अथ धारयितृगौरवादपि प्राशस्त्यं दर्शयति अबिभस्त्वेन्द्रः इति। हे प्रशस्तमणे त्वा त्वाम् इन्द्रः सर्वदेवाधिपतिः स्वकीयवृत्रहननादिसिद्धये स्वाराज्यप्राप्तये च अबिभः भरणं कृतवान्। यस्माद् एवं तस्मात् त्वां मानुषे। जातावेकवचनम्। मानुषेषु मध्ये बिभ्रत् पुरुषः संश्रेषणे परस्परसंश्लेषणसाधने संग्रामे अजयत् जयति। सहस्रवीर्यम् अपरिमितसामर्थ्यं मणिं स्राक्त्यं देवाः पुरा वर्म कवचम् अकृण्वत कृतवन्तः वर्मवद् रक्षाकरम् अकुर्वन्।

यस्त्वा कृत्याभिर्यस्त्वा दीक्षाभिर्यज्ञैर्यस्त्वा जिघांसति।
प्रत्यक् त्वमिन्द्र तं जहि वज्रेण शतपर्वणा॥ १५॥

हे शान्तिकाम पुरुष यः पुमान् त्वा त्वां कृत्याभिः हिंस्राभिः क्रियाभिः जिघांसति हन्तुम् इच्छति यश्च त्वा त्वां दीक्षाभिः यज्ञियैर्वाग्यमनादिनियमविशेषैः जिघांसति। तथा यः च त्वा त्वां यज्ञैः हिंसासाधनैः श्येनेष्वादिभिर्यागैः जिघांसति तं पुमांसं घातकं हे इन्द्र इन्द्रात्मक त्वं शतपर्वणा शतसन्धिकेन वज्रेण प्रत्यक् प्रतिमुखं जहि घातय।

अयमिद् वै प्रतीवर्त ओजस्वान् संजयो मणिः।
प्रजां धनं च रक्षतु परिपाणः सुमङ्गलः॥ १६॥

अयं मणिः प्रतीवर्त इद् वै कृत्यादिप्रतिवर्तनसाधन एव खलु। ओजस्वान् अतिशयितौजाः संजयः संगतजयः सम्यग् जेता वा। स मणिः प्रजां पुत्रादिरूपां धनं च रक्षतु पालयतु। पुनर्विशेष्यते—परिपाणः परिपातीति परिपाणः मां परितो रक्षकः। सुमङ्गलः शोभनमाङ्गल्यसाधनभूतः।

असपत्नं नो अधरादसपत्नं न उत्तरात्।
इन्द्रासपत्नं नः पश्चाज्ज्योतिः शूर पुरस्कृधि॥ १७॥

हे इन्द्र शूर त्वम्। मणिर्वा इन्द्रशब्देन उच्यते। नः अस्माकम अधरात्

दक्षिणदिग्भागाद् । असपत्नं सपत्नविघातकम् । ज्योतिः इति सम्बन्धः । तत् पुरः पुरोदेशे कृधि कुरु । एवम् उत्तरात् पश्चात् इति वाक्यद्वयमपि व्याख्येयम् । अथवा अधरात् उत्तरतः पश्चात् इति देशत्रयस्य उपादानात् पुरोज्योतिरिति पूर्वदेशो विवक्षितः । अथवा दिक्त्रयदेशेभ्योऽपि असपत्नं सपत्नाभावं पुरोदेशे ज्योतिश्च हे इन्द्र शूर त्वं कृधि कुर्विति व्याख्येयम् ।

वर्म मे द्यावापृथिवी वर्माहर्वर्म सूर्यः ।
वर्म म इन्द्रश्चाग्निश्च वर्म धाता दधातु मे ।। १८ ।।

मे मह्यं द्यावापृथिवी द्यावापृथिव्यौ देवते वर्म तनुत्रं धत्ताम् कुरुताम् । तथा अहः अहरभिमानिदेवताऽपि मे वर्म दधातु । एवं सूर्येन्द्राग्निधातृवाक्यान्यपि योज्यानि ।

ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वे देवा नाति विध्यन्ति सर्वे ।
तन्मे तन्वं त्रायतां सर्वतो बृहदायुष्मां जरदष्टिर्यथासानि ।। १९ ।।

यत् मणिलक्षणम् ऐन्द्राग्नम् इन्द्राग्निदेवताकम् इन्द्राग्निभ्याम् अभिमानितं बहुलं प्रभूतम् उग्रम् उद्गूर्णबलं वर्म कवचं विश्वे देवाः एतत्संज्ञया व्यवह्रियमाणा देवाः सर्वेऽपि नातिविध्यन्ति अतिवेधनं न कुर्वन्ति । किं तु सर्वेऽपि पालयन्तीत्यर्थः । तत् तथाविधं मणिलक्षणं वर्म मे तन्वं तनूं शरीरं सर्वतः त्रायतां पालयतु । कीदृक् तत् । बृहत् प्रभूतम् । अहं च यथा आयुष्मान् शतसंवत्सरेण आयुष्येण तद्वान् जरदष्टिः जीर्णावस्थापर्यन्तम् अशनवान् असानि भूयासं तथा त्रायताम् ।

आ मा रुक्षद् देवमणिर्मह्या अरिष्टतातये ।
इमं मेथिमभिसंविशध्वं तनूपानं त्रिवरूथमोजसे ।। २० ।।

देवमणिः देवेन इन्द्रेण धृतत्वाद् वा देवैः इन्द्राग्न्यादिभिरभिमानितत्वाद् वा देवमणिः । स मा माम् आरुक्षत् भुजादिप्रदेशम् आरूढवान् । किमर्थम् मह्यै । महत्यै । मह्यम् इति वा । अरिष्टतातये । रिष्टं नाशस्तदभावः अरिष्टम् । अरिष्टकरणाय । क्षेमायेत्यर्थः । किं च हे नराः यूयमपि इमं मेथिम् शत्रूणां विलोडयितारं विनाशयितारम् । यद्वा मेथी ( तृणविशेषः ) खले यथा उच्छ्रिता वर्तते एवम् अयमपीति मेथीवत् मेथिः । तम् अभिसंविशध्वम् । अभितः सम्यग् आश्रयध्वम् । अथवा इमं मेथीस्थानीयं मणिं हे इन्द्रादिदेवा यूयम् अभिसंविशध्वम् अधितिष्ठत । कीदृशम् । तनूपानम् तन्वाः शरीरस्य पातारं त्रिवरूथं त्रिविधावरणोपेतम् आद्यन्तमध्यभागैस्त्र्यात्मकं वा । किमर्थम् अभिसंवेशनम् इति उच्यते—ओजसे बलाय बलाभिवर्धनाय ।

अस्मिन्निन्द्रो नि दधातु नृम्णमिमं देवासो अभिसंविशध्वम् ।
दीर्घायुत्वाय शतशारदायायुष्मान् जरदष्टिर्यथाऽसत् ।। २१ ।।

अस्मिन् मणौ इन्द्रो देवो नृम्णम् सुखम् अस्मदभिमतम् नि दधातु स्थापयतु । इमं मणिं हे देवासः देवा यूयम् अभिसंविशध्वम् अभितः अधितिष्ठत । किमर्थम् एवं प्रार्थनेति चेत् उच्यते—दीर्घायुत्वाय प्रभूतस्य आयुषः प्राप्तये । एतस्यैव

व्याख्यानं शतशारदायेति। शरच्छब्देन तदुपलक्षितः संवत्सरोऽभिधीयते। शतसंख्याकाः शरदः शतशरदः। शतशरत्संख्यायुः शतशारदं तस्मै। तस्यैव तात्पर्यम् आह—आयुष्मान् उक्त शतसंवत्सरलक्षणेन आयुष्येण युक्तः। न केवलम् आयुर्वृद्धिरेव पर्याप्ता किं तु तावत्कालम् अशिष्ठेन (अधिकभक्षकेन) अपि भवितव्यम् इत्यभिप्रेत्याह—जरदष्टिः इति, उक्तो जरदष्टिशब्दार्थः (१९ मन्त्रे)। उक्तगुणद्वयविशिष्टो यथा येन प्रकारेण असत् भवेत् तथास्मिन्निन्द्रो नृम्णं दधातु। देवा अपि इमम् अभिसंविशध्वम् इति सम्बन्धः।

**स्वस्तिदा विशां पतिर्वृत्रहा विमृधो वशी।**
**इन्द्रो बध्नातु ते मणिं जिगीवाँ अपराजितः सोमपा अभयङ्करो वृषा।**
**स त्वा रक्षतु सर्वतो दिवा नक्तं च विश्वतः ॥ २२ ॥**

इन्द्रो देवः ते तव उक्तमहिमोपेतं मणिं बध्नातु इति वाक्यार्थः। कीदृशः इन्द्र इति तं विशिनष्टि। स्वस्तिदाः स्वभक्तानाम् अविनाशिलक्षणक्षेमप्रदाता। स्वयं च विशां देवमनुष्यादिलक्षणानां प्रजानां पतिः पालयिता स्वामी। वृत्रहा वृत्रस्य असुरस्य हन्ता। विमृधः विगतयुद्धः विविधं शत्रुविनाशकारी वा। वशी सर्वस्य वशयिता। जिगीवान् जयशीलः। अपराजितः स्वयम् अन्यैरनभिभूतः। सोमपाः सर्वेष्वपि सोमयागेषु स्वयमेव मुख्यत्वेन सोमस्य पाता। अभयंकरः अभयं भयराहित्यं तस्य कर्ता, वृषा सेक्ता अतिशयितपुंस्त्वस्य अभिमतफलस्य वर्षिता वा। स तादृशो देवो मणिं बद्ध्वा त्वा त्वां सर्वतः सर्वस्मादपि भयनिमित्ताद् रक्षतु। किम् एकदा। नेत्याह। दिवा नक्तं च। सर्वदेत्यर्थः। सर्वत इत्युक्तमेवार्थम् आदरार्थं पुनराह विश्वत इति।

## पुरोहितः—

तत्र मन्वादिभिः प्रयुक्तेष्वङ्गेषु प्रकृतिषु वा अमात्यपदेन मन्त्रिपदेन च पुरोहितो[1] गृह्यते। वस्तुतो विचारोऽयं वेदमूलकः। वेदेषु पुरोहित एव मन्त्रिपदेनोक्तः। वेदेषु 'रत्नि' प्रकरणे पुरोहितस्य महत्त्वं श्रूयते। पुरोहितो जात्या ब्राह्मणो भवतीति सुप्रसिद्धम्। पुरोहितोऽयं वेदेष्वग्निशब्देनोपमीयते यत्र तत्र। अस्य ब्राह्मणवर्णोपजीविनः पुरोहितस्य मूलं ब्रह्म वर्तते। केषाञ्चिन्मतेन— 'आर्याणां साम्यसङ्घस्य नाम ब्रह्म, यज्ञश्च तस्य समाजोत्पादप्रणाली वर्तते[2]।' तथा च 'साम्यसङ्घार्थं प्रयुज्यमानोऽयं ब्रह्मशब्दः कालान्तरेण वर्णवाचको बभूव। यः ब्रह्मणः साम्यसङ्घस्य तत्त्वं जानाति स ब्राह्मणः। ब्रह्म सामूहिके ( राष्ट्रिये ) सङ्घे तिष्ठन् समस्ते ब्रह्माण्डेऽपि तिष्ठत्येव[3]।

उपर्युक्तानुसारेण ब्राह्मणस्य महत्त्वं सर्वोपरि वर्तते विशेषेण राज्यशासनदृष्ट्या। अतः अयमेव सर्वस्योत्पादकः सर्वश्रेष्ठः ज्येष्ठश्चेति श्रूयते वेदेषु पुराणा-

१. मनुस्मृतिः ( ९।२९४ ) मेधातिथिः। २. 'भारत' पृ० ४८।
३. तत्रैव पृ० ५८।

दिषु च। यथा—'ब्रह्म जज्ञानं प्रथमं पुरस्तात्', 'ब्रह्म ज्येष्ठा सम्भृता वीर्याणि', 'ब्रह्म ह वा इदमग्र आसीत्', 'ब्रह्म ह वै इदमग्र आसीत्[1]' इत्यादि।

ब्रह्मणस्पतिः—अस्य राजनीत्युपयोगिनः अपराः विकसिताः शब्दाः ब्रह्मणस्पतिर्बृहस्पतिरित्यादयो वर्तन्ते। अयं ब्राह्मणः न केवलं धार्मिककर्मकाण्ड-कर्ता परं राज्यसमाजयोरुपकारभूतानां नेतृणाञ्चोपजीव्यः।

ब्रह्मशब्दस्य यज्ञकर्मणि सर्वश्रेष्ठऋत्विक्सम्बन्धेन वारं वारं समुल्लेखो भवति। वेदकालीनानामार्याणां[2] 'ब्रह्म' पार्थिवो जीव आसीत्। तदेवौपनिषदं ब्रह्म दार्शनिकानां सर्वशक्तिमत् कारणरूपं निर्गणञ्चाभवत्। तत्र हागमहोदयेनास्य विविधार्था इत्थं प्रदर्शिताः—१. अन्नं वा अन्नबलिः, २. उद्गातुः सङ्गीतम्, उच्चारणं वेदपाठो वा, ३. अभिचारस्यैकं सूत्रम्, ४. वेदपाठः, दक्षिणा च, ५. होता वेदपाठो वा, ६. महाँश्चेति।

ऋग्वेदे ब्रह्मणस्पतेः स्तुतिर्लभ्यते यत्र सायणाचार्येण ब्रह्मणस्पतेरर्थोऽन्नमिति कृतः। ब्रह्मणस्पतिरन्नस्य स्वामी वक्तुं शक्यते। सुप्रसिद्धविदुषां राजवाडेमहोदयानां मतानुसारेण अयमेव साम्यसङ्घस्य सदस्यानामग्रणीश्च[3]। अस्यानुशासने सङ्घस्य सर्वे सदस्याः तिष्ठन्ति स्म। स्वजीविकान्वेषणे इमे सार्थवाहाः चलं यज्ञमण्डपं सङ्गृह्य परिभ्रमन्ति[4] स्म। अस्मिन् वैदिके साम्यसङ्घे पुत्रकलत्रादयोऽपि भवन्ति स्म। साम्यसङ्घोऽयं स्वनेत्रा ब्राह्मणेन संरक्षितः शासितश्चासीत्।

पुरोहितमहत्त्वम्—सामाजिकविकासस्य द्वितीये चरणे ब्राह्मणात् क्षत्रियो विभक्तः। यदा केवलं ब्राह्मणगण[5] एव आसीत् तदा समाजे कोऽपि भेदः युद्धपरिचालनं शान्तिस्थापनादिकं च किमप्यावश्यकं नासीत्। पश्चात् ब्राह्मणक्षत्रयोः कृते पुरोहितो राजा चेति पदं स्वीकृत्य भेदो बभूव। तत्र ब्राह्मणोत्पन्नस्यास्य पुरोहितस्य क्षत्रवर्णोत्पन्नो राजा महासत्कारं करोति स्म। ऋग्वेदस्य प्रथमे मन्त्रे पुरोहितस्य[6] महत्त्वं सर्वविश्रुतं वतते एव।

दर्शकेषु कश्चिद् धर्मज्ञो ब्राह्मणो यदि अनुचितनिर्णयस्य विरोधं करोति तदा तत्कथनस्य सावधानतया श्रवणमावश्यकं मन्यते स्म। पुरोहितस्तु राज्य-

---

१. अथर्व० ४।१।१, ५।६।१, १९।२२।२१, श० ब्रा० १४।४।२।२३, अपि च, तै० आ० 'सत्यं ज्ञानमनन्तं ब्रह्म' ८।२ इति श्रुत्यन्तसिद्धं सच्चित्सुखात्मकम् अपरिच्छिन्नं सर्वजगत्कारणं यत् परं ब्रह्म तत् पुरस्तात् पूर्वस्मिन् काले सृष्ट्यादौ प्रथमं प्रथमकार्यहिरण्यगर्भरूपं सूर्यात्मकं जज्ञानं जातम् उत्पन्नम्।

२. 'जातककालीन० पृ० ५५-५६ विषयमवलम्ब्य कृतपरिश्रमाणां हॉग-एगलिङ्ग-हिलेब्राण्ड-केतकर-तिलकादीनां विचारा अपि द्रष्टव्याः।

३. राधामाधवमें विवाद, पृ० १०७।

४. द्र० कुन्ते महोदयस्य-आर्यसभ्यताओं का अवस्थान्तर।

५. पूर्वं हि ब्रह्मणः सृष्टिरिति ब्रह्मविदो विदुः महाभा० शा० ७३।२०।

६. अग्निमीळे पुरोहितमिति अस्य कार्यस्य वैशिष्ट्यम्-ऋ० ७।६०।१२, ८।३।४।

स्याद्यांशः एव स्वीकृतः। वेदेभ्यः धर्मशास्त्राणि यावत्तदस्तित्वमासीत्। अग्नितुल्यो राज्यशासनवित् पुरोहितः शत्रुसैन्यादागतानामाक्रमणानि घातकप्रयोगांश्च तद्विरुद्धासु दिक्षु प्रेषयति स्म[1]। अयं पुरोहित आङ्गिरसीं विद्यां जानाति स्म, एतदुद्दिश्यैव मन्त्रेऽस्मिन् वर्णनमिदं लभ्यते—

प्रतीचीन आङ्गिरसोऽध्यक्षो नः पुरोहितः।
प्रतीचीः कृत्या आकूत्याऽमून्कृत्याकृतो जहि[2] ॥

अयं स्वयं घातकप्रयोगान् जानन्नपि शत्रुत आगतान् प्रयोगान् प्रत्यावर्तयितुं समर्थः। अयं प्रसङ्गे समागते सति सेनापतेः सेनाध्यक्षस्यापि वा पदमलङ्करोति स्म। यथा—

अयमग्निः सत्पतिर्वृद्धवृष्णो रथीव पत्तीनजयत्पुरोहितः[3]।
नाभा पृथिव्यां निहितो दविद्युतदधस्पदं कृणुतां ये पृतन्यवः ॥

प्रतिज्ञा—पृथिव्याः केन्द्रभूतः सर्वप्रकाशकः सत्पतिश्च पुरोहितः न केवलं सर्वेभ्यः स्तुतिं प्राप्नोति, अपि तु स्वकर्त्तव्यमवगत्य प्रतिज्ञापुरस्सरमुद्घोषयत्यपि। यथा—

संशितं म इदं ब्रह्म संशितं वीर्यं बलम्।
संशितं क्षत्रमजरमस्तु जिष्णुर्येषामस्मि पुरोहितः ॥ १ ॥
समहमेषां राष्ट्रं स्यामि समोजो वीर्यं बलम्।
वृश्चामि शत्रूणां बाहूननेन हविषाहम् ॥ २ ॥
नीचैः पद्यन्तामधरे भवन्तु ये नः सूरिं मघवानं पृतन्यान्।
क्षिणामि ब्रह्मणामित्रान्नुन्नयामि स्वानहम् ॥ ३ ॥
तीक्ष्णीयांसः परशोरग्नेस्तीक्ष्णतरा उत।
इन्द्रस्य वज्रात्तीक्ष्णीयांसो येषामस्मि पुरोहितः ॥ ४ ॥
एषामहमायुधा सं स्याम्येषां राष्ट्रं सुवीरं वर्धयामि।
एषां क्षत्रमजरमस्तु जिष्ण्वेषां चित्तं विश्वेऽवन्तु देवाः ॥ ५ ॥
उद्धर्षन्तां मघवन्वाजिनान्युद्वीराणां जयतामेतु घोषः।
पृथग्घोषा उलूलयः केतुमन्त उदीरताम्
देवा इन्द्रज्येष्ठा मरुतो यन्तु सेनया ॥ ६ ॥
प्रेता जयता नर उग्रा वः सन्तु बाहवः।
तीक्ष्णेषवोऽबलधन्वनो हतोग्रायुधा अबलानुग्रबाहवः ॥ ७ ॥
अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते।
जयामित्रान्प्र पद्यस्व जह्येषां वरंवरं मामीषां मोचि कश्चन[4] ॥ ८ ॥

अस्मिन् सूक्ते पुरोहितो राष्ट्रस्य समाजस्य स्वयजमानस्य (राज्ञः) च

---

१, द्र० प्राचीन भारत में राज्य और न्याय पालिका, पृ० १४७। अथर्व० ८।५।५–६।
२. अथर्व० १०।१।६। ३. तत्रैव ७।६२।१।
४. तत्रैव ३।१९।१–८।

सर्वमङ्गलकामनया संरक्षणार्थमुत्कर्षार्थञ्चोद्घोषयति, यदहं येषां विजयाभिलाषी पुरोहितोऽस्मि, तेषां प्रजारक्षकाणां क्षत्रियाणां जरारहितमक्षीणं बलं वर्धेत। अहं राष्ट्रस्य शत्रूणां बाहून् छेत्स्यामि। ये नः राष्ट्रस्य सूरिं मघवानं (मघम् इति धननाम) पृतन्यान्, तेऽधः पतन्तु, अहं ज्ञानास्त्रेणामित्रान् विनाश्य स्वानुन्नयामि। मम यजमानस्य (राष्ट्रस्य) सर्वाणि शस्त्रास्त्राणि तीक्ष्णतराणि भवन्तु। येषामहमायुधानि संस्यामि, राष्ट्रं वर्धयामि च। हे राष्ट्रवीराः! उद्धर्षन्ताम्, सेनया प्रेत, जयत, उग्रबाहवः! अबलान् बलरहितधनुराद्यायुधोपेतान् अपि हत। ब्रह्मसंशिते शरव्ये अमित्रान्. जय। एषां वरीयान् वीरान् जहि। अमीषां कश्चित् मुक्तो मा भूत्।

अग्निः पुरोहितः—उपर्युक्तं सूक्तमवलोक्य पुरोहितस्य यथार्थं सुस्पष्टं च राज्यशासकीयं नैतिकं च स्वरूपमवगम्यते। वेदेषु बहुत्राग्निमिषेण पुरोहितस्याधिकारकर्तव्ययोस्तस्य योग्यतादीनां च वर्णनं लभ्यते। इममेवावलम्ब्याथर्ववेदस्यैकस्य सूक्तस्य[1] विचारः पुरः स्थाप्यते—

स्तुवानमग्न आ वह यातुधानं किमीदिनम्।
त्वं हि देव वन्दितो हन्ता दस्योर्बभूविथ॥ १॥
आज्यस्य परमेष्ठिन् जातवेदस्तनूवशिन्।
अग्ने तौलस्य प्राशान यातुधानान् वि लापय॥ २॥
वि लपन्तु यातुधाना अत्त्रिणो ये किमीदिनः।
अथेदमग्ने नो हविरिन्द्रश्च प्रति हर्यतम्॥ ३॥
अग्निः पूर्व आ रभतां प्रेन्द्रो नुदतु बाहुमान्।
ब्रवीतु सर्वो यातुमानयमस्मीत्येत्य॥ ४॥
पश्याम ते वीर्यं जातवेदः प्रणो ब्रूहि यातुधानान्नृचक्षः।
त्वया सर्वे परितप्ताः पुरस्तात्त आ यन्तु प्रब्रुवाणा उपेदम्॥ ५॥
आ रभस्व जातवेदोऽस्माकार्थाय जज्ञिषे।
दूतो नो अग्ने भूत्वा यातुधानान् वि लापय॥ ६॥
त्वमग्ने यातुधानानुपबद्धाँ इहा वह।
अथैषामिन्द्रो वज्रेणापि शीर्षाणि वृश्चतु॥ ७॥

अत्रादौ सूक्तस्था अग्निवाचकाः शब्दा—जातवेदाः, परमेष्ठी, तनूवशी, नृचक्षाः, वन्दितः, दूतः, देवः, अग्निः इत्यादयो विचार्यन्ते। तद्यथा—

(१) सर्वं चराचरं वेत्तीति जातवेदाः।
(२) सर्वश्रेष्ठपदे तिष्ठतीति परमेष्ठी।
(३) सशरीरं बाह्यान्तःकरणानि यस्य वशे भवन्ति सः तनूवशिन्।
(४) सुस्पष्टमुच्चारयति वदति च सः नृचक्षः।
(५) स्वोपदेशदानेन तेजसा च सर्वत्र पूज्यत्वाद् वन्दितः।

---

१. अथर्व० १।७।

(६) राष्ट्रे परराष्ट्रे च स्वराष्ट्रस्य संरक्षणार्थं सञ्चरति स दूतः।

(७) द्युस्थानीयत्वात् प्रकाशमानत्वाच्च देवः[1]।

(७) सर्वाग्रणीः सर्वमक्नोपयति (अक्नोपनो भवतीति) च सोऽग्निः। इमानि विशेषणान्यग्नितुल्यपुरोहितस्य सामाजिकं शासनिकं च वैशिष्ट्यं सूचयन्ति।

अतोऽग्रे सूक्तस्य मन्त्रानुसारेणार्थः प्रदर्श्यते—

(१) सर्ववन्दित हे अग्ने! स्तुतिपाठकान् घातकान् शत्रूनत्र आनय। त्वयात्र भयङ्करा यातुधानाः समानेतव्याः। मन्त्रेऽस्मिन् स्तुवानं पदं महत्त्वपूर्णं वर्तते। स्तुवानं स्तुतिकर्तारम्। यः पूर्वशत्रुः पश्चादात्मसमर्पणं करोति तम्। आत्मसमर्पितोऽयमेव दासत्वमलभत इत्यनुमीयते।

(२) परमे पदे प्रतिष्ठित अग्निदेव! त्वं परिमितं सन्तुलितं भोजनं कुरु दुष्टान् सन्तापय च। अत्र ब्राह्मणस्य परिमितत्वमेको गुणः। सन्तुलित-भोजनस्यायुर्वेददृष्ट्या महत्त्वं जानन्त्येव विद्वांसः। कर्मकाण्डेऽपि विविधाहुतीनां प्रमाणं पृथक् पृथग् विहितम्। तत्रैव प्रमाणरहितानामाहुतीनां न्यूनाधिकत्वात् प्रायश्चितस्य विधानमपि वर्णितम्।

(३) हे अग्नीन्द्रौ! नः हविः (बलिं करं वा) स्वीकुरुतम्। हविषा सुपुष्टयोः युवयोः पराक्रमं दृष्ट्वा यातुधाना बिभीयुः। मन्त्रेऽस्मिन् अग्नीन्द्रौ ब्राह्मणक्षत्रियवाचकौ स्तः।

(४) अत्राग्नीन्द्रयोः प्रभावेण भीतानां यातुधानानामात्मसमर्पणस्य वर्णनं वर्तते।

(५) हे ज्ञानिन्! मार्गदर्शक! वयं भवतः पराक्रमं पश्यामः। भवान-स्माकमादेशं दुष्टान् श्रावयतु। अनेनेदमवगम्यते यदग्नेः सूचनाप्रसारणस्यापि कार्यमासीत्। त्वया (अग्निना) परितप्ताः दण्डिताः भयप्राप्ता वा दुष्टास्ते इदं ब्रुवाणाः (अयमहमस्मीति) पूर्वोक्तं वाक्यम्।

(६) हे अग्ने! अस्माकं प्रयोजनाय कार्यमारभस्व। एतदर्थमेव त्व-मुत्पन्नः। हे अग्ने! नः दूतो भूत्वा यातुधानान् विलापय। अत्र दूतत्वेन परस्पर-विरुद्धराष्ट्रेषु दौत्यस्य सङ्केतो लभ्यते।

(७) हे अग्ने! यातुधानान् बद्ध्वात्रानय। इन्द्रश्चैषां शीर्षाणि वृश्चतु। अत्र अग्नेः (ब्राह्मणस्य) कृते केवलं शत्रुबन्धनस्य मोहनस्य वा अधिकारः प्रदर्शितः। परमिन्द्रस्य (क्षत्रियस्य) कृते प्राणान्तकरणस्याधिकारः प्रोक्तः। अनेन व्यज्यते यत् क्षत्रिय एव हिंसको भवितुं शक्नोति न तु ब्राह्मणः।

सूक्तेऽस्मिन् राज्ञा इन्द्रेण सह पुरोहितस्याग्नेः सम्बन्धः महत्त्वपूर्णोऽस्ति।

---

१. देवशब्दः नेतृवाचकः —डा० राजबलीपाण्डेयलिखिते भारतीय नीति का विकास ग्रन्थे, पृ० ३१।

ईदृगेवाग्निमं सूक्तमप्यग्निमहत्त्वसूचकं वर्तते। अनयोः सूक्तयोः द्रष्टा 'चातन' ऋषिः वर्तते। प्रायः चातनर्षेः सूक्तान्युपर्युक्तार्थकान्येव भवन्ति।

तत्र विजयकामुकसूक्तेष्वपि[1] अग्निविषया सामग्री लभ्यते। यथा—हे अग्ने! युद्धेषु मम वर्चस्वमस्तु। 'वयं त्वा इन्धानास्तन्वं पुषेम, तवाध्यक्षत्वे वयं सङ्ग्रामे विजयामहे।' इति अत्राध्यक्षत्वेनाग्नेः सेनायाः सर्वोच्चाधिकारित्वं सूच्यते। अस्यैव 'पृतनाषाड्'[2] इत्यपि नाम वर्तते।

अग्नेः सङ्ग्रामविजयस्य सैन्यसञ्चालनस्य च वर्णनं वेदेषु बहुत्र लभ्यते। अथर्ववेदस्य तृतीयकाण्डस्य प्रथमद्वितीयसूक्तयोरस्य सैनिकं स्वरूपं स्पष्टं भवति। तत्र 'स सेनां मोहयतु' इत्यनेन शत्रुसेनायाः सम्मोहनस्य, 'चक्षूंष्यग्निरादत्ताम्' इत्यनेन शत्रोः चक्षुर्विनाशस्य, 'अप्वा'—शब्देन व्याधिविशेषस्य जालप्रसारणस्य च, 'अन्यो अन्यं न जानात्[3]' अनेनापि मोहनस्य भ्रमस्य चोत्पादनं विधाय शत्रूणां पारस्परिकसङ्घबलस्य विनाशस्य सङ्केतः उपलभ्यते।

संक्षेपतः सूक्तयोः प्रमुखा विषयाः सन्ति—१. शत्रुसैन्येषु मोहनम्, २. भीत्युत्पादनम्, ३. आग्नेयास्त्रम्, ४. तमोऽस्त्रम्, ५. दृष्टिविलोपकरणम्, ६. अप्वारोगविवर्धनम्, ७. ग्राहि (सन्धिवात) रोगविवर्धनञ्च।

इत्थं वेदेष्वग्निः (पुरोहितः) प्रधानमन्त्रालयस्यापि सर्वोच्चाधिकारी सिद्ध्यति। अनेन सह सेनापतयः मरुद्वस्वादयः आसन्, यानयं पृथक् पृथग् योग्यस्थलेषु संस्थाप्य स्वयं सम्पूर्णं युद्धं समचालयत्।

## गुप्तचरः

राज्यशासने गुप्तचरविभागस्यापि महत्त्वपूर्णं स्थानं वर्तते। इदं वेदमूलकमेव। वेदेषु गुप्तचरस्य बहवः पर्यायाः[4]लभ्यन्ते। कौटिल्यादिभिराचार्यैः वेदान्तर्गतान् सभेदगुप्तचरपर्यायानुपजीव्यैव स्वग्रन्थेष्वपि गुप्तचरस्य भेदाः प्रदर्शिता इति।

यद्यपि गुप्तचरत्वेऽप्यग्नेर्महत्त्वमासीत्तथापि वरुण[5] एवास्य विभागस्य सर्वोच्चाधिकारी मन्यते स्म। वेदेषु पशुपक्षिणामपि गुप्तचरत्वं स्पष्टतः श्रूयते।

---

१. ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम।
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम॥ अथर्व० ५।३।

२. अग्ने पृतनाषाट् पृतनाः सहस्व। पुनः कृत्यां कृत्याकृते प्रतिहरणेन हरामसि। अथर्व० ५।१४।८।

३, समन्वयार्थम्—अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि।
अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम्॥' ऋ० १०।१०३।१२, निरुक्तम् ९।३३, 'तां गूहत तमसापव्रतेन यथामी अन्यो अन्यं न जानन्' यजु० १७।४७।

४. यथा—स्पशः प्रैष्यः दूतः पालागलः पालगली प्रहितः यमदूताः बलगमित्यादयः।

५. द्र० अस्य निबन्धस्य ऋतप्रकरणम्।

यद्यपि वेदेषु गुप्तचरस्य पर्यायत्वेन दूतादिशब्दा लभ्यन्ते तथापीदमपि न विस्मर्तव्यं यदेते दूतादिशब्दाः क्वचित् पृथगर्थेष्वपि प्रयुज्यन्ते। मन्ये दूतवार्ताहर-सेवकादयः पृथगर्थकाः, परं सूक्ष्मत्वेन तेषु गुप्तचरत्वमपि भवत्येव। अतः सामान्य-तस्तेषां गुप्तचरत्वेऽन्तर्भावः कर्तुं शक्यते।

## चारवाचकाः शब्दाः—

चारार्थं वैदिकभाषायां स्पश-शब्दः प्रचुरतया लभ्यते। वेदोत्तरसाहित्ये[1] शब्दोऽयं क्वचिदेव श्रूयते। यथाथर्ववेदे—

**तस्य स्पशो न निमिषन्ति भूर्णयः पदे पदे पाशिनः सन्ति सेतवे[2]।**

**तथैव—दिव स्पशः प्रचरन्तीदमस्य सहस्राक्षा अति पश्यन्ति भूमिम्[3]।**

**तथैव—यतो व्रतानि पस्पशे[4]।**

सम्भवत आंग्लभाषायाः 'स्पाई' गुप्तचरार्थकः, हिन्दीभाषायाः, 'सिपाही' पुलिसवाचकः, अरबभाषायाः 'सिपहसालार' सेनापतिवाचकश्च स्पशानुयायिन एव वक्तुं शक्यन्ते।

प्रैष्यशब्दोऽपि मुख्यतः सन्देशवाहकार्थकस्तथाप्ययमेव प्रैष्यः क्वचित् सन्देशवाहनेन सह गुप्तचरत्वमपि चरति[5]। सन्दर्भेऽस्मिन् सूक्ष्मदर्शकत्व-गूह-(गूढ)-चरत्वगमनार्थकाः शब्दा अपि विशेषेण विचारणीयाः।

विविधेषु प्रसङ्गेष्वग्नेर्दूतत्वं[6] पापमोचनार्थं तस्य स्तुतिश्च वेदेषु विपुलतया लभ्यते। अत्र दौत्यकर्मणि अग्निना सुयोग्यं दूतकर्म सम्पादनार्थमनेकानि स्वरूपाणि स्वीकृतानि।

पालागलः पालागली वा शब्दः रत्निप्रकरणे[7] व्याख्यातः। शतपथेऽयमशुभ-सूचकवार्ताहरत्वेनोक्तः[8]। वेदेषु पुरुषा इव स्त्रियः अपि चारकर्मणि निपुणा भवन्ति स्म। 'पालागल' इव 'पालागली'[9] अपि रत्निप्रकरणे वर्णिता। इयं राज्ञः तुर्या पत्नी आसीत्।

## प्रहितः

इन्द्रेण राज्ञा लब्धजीवनः, अरिष्टनिवारकेण देवेन वरुणेनानुज्ञातः, सर्व-व्यापकैः पञ्चाशन्मरुद्गणैः उद्गूर्णबलः सन् प्रेषितः स प्रहित इति श्रूयते। यथा—

---

१. स्पशे शनैर्गतवति तत्र विद्विषाम् —शिशु० १७।२०, शब्दविद्येव नो भाति राजनीति-रपस्पशा —तत्रैव २।११२।

२. अथर्व० ५।६।३।

३. तत्रैव ४।१६।४।

४. तत्रैव ७।२६।१, ऋ० १।२५।१३,४।४।३, ६।६७।५,७।८७।३, ८।४७।११, १०।१०।८।

५. तत्रैव ५।२२।१४, ऐ० ब्रा० २।२९।

६. द्र० अस्य निबन्धस्य पुरोहितप्रकरणम्।

७. अस्य निबन्धस्य रत्निप्रकरणम्।

८. श० ब्रा० ५।३।१।११।

९. तत्रैव १३।४।१।८, १३।५।२।८।

इन्द्रेण दत्तो वरुणेन शिष्टो मरुद्भिरुग्रः प्रहितो न आगन्[1] ।

अत्रेन्द्रवरुणमरुद्भिः सह प्रयुक्तः प्रहितशब्दः यथार्थतो गुप्तचरवाचकः । अपि च—सायंप्रातः मनुष्यैरुपासनीयो जातवेदा अग्निः दूतत्वे नियुक्तः प्रहित उच्यते । यथा

अभूद्दूतः प्रहितो जातवेदाः सायं न्यह्न उपवन्द्यो नृभिः[2] ।

तत्र गारुडे[3] पठ्यते यज्जीवानां पापपुण्यात्मककर्मनिरीक्षणार्थं श्रवणश्रवण्योः नियुक्तिः धर्मराजेन कृता । इयमपि स्पष्टतो वेदमूलिका एव । तद्यथाथर्ववेदे—

वैवस्वतेन प्रहितान् यमदूतांश्चरतोऽपि सेधामि सर्वान्[4] ।

अत्र स्थले प्रहितयमदूतयोः युगपत् सङ्केतो विचारणीयः । अपि च—

यौ ते दूतौ निर्ऋत इदमेतोऽप्रहितौ प्रहितौ वा गृहं नः ।
कपोतोलूकाभ्यामपदं तदस्तु[5] ॥

पशुपक्ष्यादीनां गुप्तचरत्वम्—

वेदेषु सरमायाः शुन्याः गुप्तचरत्वं सर्वविश्रुतम् । इन्द्रस्य प्रसिद्धा दूती सरमानाम्नी शुनी आसीद् या पणिषु इन्द्रस्य गा अन्वेषयति स्म । यथा—

अपो यदद्रि पुरुहूत दर्दराविर्भुवत् सरमा पूर्व्यं ते ।
स नो नेता वाजमा दर्षि भूरिं गोत्रा रुजन्नङ्गिरोभिर्गृणानः[6] ॥

अथर्ववेदे[7] कपोतसम्बद्धानि त्रीणि सूक्तानि लभ्यन्ते, कपोतो दूतत्वेनाभिहितः । अत्र[8] मन्त्रे 'अनु पस्पशानः' स्पष्टतः गुप्तचरत्वं सूचयति, ऋगादिष्वप्ययमुलूकेन सह निर्ऋतेः—(दुर्भाग्यस्य) दूतत्वेनोक्तः[9] ।

कपोतस्य इव श्येनस्यापि परक्षेत्रे गत्वा सन्देशवाहकत्वं हव्यवाहकत्वादीनां चोदाहरणानि लभ्यन्ते, यथा—

श्येनो हव्यं नयत्वा परस्मादन्यक्षेत्रे अपरुद्धं चरन्तम्[10] ।

एवमेव—प्रहितोऽपि ज्ञातव्यः ।



---

१. अथर्व० २।२९।४ ।
२. तत्रैव १८।४।६५ ।
३. गरुडपु० २।९–१० ।
४. अथर्व० ८।२।११ यमदूतः ।
५. तत्रैव ६।२९।२, १२।४।६५ ।
६. तत्रैव २०।७७।८, ऋग्वेदेऽपि ४।१६।८, तत्रैव १०।१०८।१, एषु स्थलेषु सरमायाः विस्तृतः परिचयो लभ्यते ।
७. अथर्व० ६।२७, २८, २९ ।
८. तत्रैव ६।२८।३ ।
९. ऋ० १।३०:४, अथर्व० २०;१३५।१२, 'कपोत इव' २०।४३।१, मै० सं० ३।१४।४, यजु० २४।२३, ३८, ऋ० १०।१६५।१–५ ।
१०. अथर्व० ३।३।४ ।

# चतुर्थोऽध्यायः

## सभा-समित्यादयः

आथर्वणशासनपद्धतौ क्रमेण समाज-राष्ट्रयोरुपकारकस्य सङ्घटनस्य स्थले स्थले महत्त्वसूचकं विवरणमुपलभ्यते। प्राचीनैर्वैदिकैर्जनैः सङ्घटनस्यैव सुप्रभावेण सम्पूर्णसमाजस्य शान्तिसुरक्षार्थं च अनुशासितानां संस्थानां निर्माणं कृतमित्यद्यावधि सर्वविश्रुतं सर्वमान्यं च वर्तते। वर्तमाने यत् सामान्यं चतुष्पथजनसम्मेलनम्, ग्रामीणसम्मेलनम्, लोकसभा, विधानसभा, राज्यसभा वा दृश्यते, तत्सर्वं वेदमूलकमेव वर्तते। वेदे सामान्यलोकनिर्णयादारभ्य शासकीयपरमोच्चनिर्णयं यावत् सर्वे निर्णयाः नीतिनिर्धारणादयश्च जनसभासमितिषु सम्पद्यन्ते स्म। तत्कालीना जना अनुशासनपूर्वकं सुव्यवस्थितरूपेण विविधासु सङ्घटनसंस्थासु सम्भाषणेन नीतिनिर्धारणं कुर्वन्ति स्म। तद्यथाथर्ववेदे विज्ञायते—

**विद्म ते सभे नाम नरिष्टा नाम वा असि[1]।**

तत्र केचन जनाः भ्रमेणावबुद्ध्यन्ते यदत्र सम्पद्यमानो वादः प्रलापः सम्भाषणं वा आसीत्। वस्तुतस्तु आसु संस्थास्विन्द्रियजन्यपापकर्मणः प्रायश्चित्तस्य विधानं क्रियते स्म। तद्यथा—यद् ग्रामे यदरण्ये यत् सभायां यदिन्द्रिये। यदेनश्चकृमा वयमिदं तदवयजामहे स्वाहा॥[2] इति। सभासदः[3] सत्यवादिनो भवन्ति स्म। वस्तुतस्तेषु सङ्घटनेषु विविधा मन्त्रणा विचाराश्च भवन्ति स्म, यत्र समाजस्य प्रतिजनस्य वर्गस्य च सर्वाङ्गीणोत्कर्षार्थं समस्ते राष्ट्रे शान्त्यर्थं प्रजापालनाद्यर्थं च विचारविमर्शा भवन्ति स्म। अथर्ववेदे विषयस्यास्योपरि विपुला सामग्री समुपलभ्यते। वेदोत्तरवर्तिषु ग्रन्थेषु वेदेषु सूत्ररूपेण स्थितानां वर्णनानां व्याख्या लभ्यते। यद्यपि मनु-भीष्म-शुक्र-कौटिल्यादि-नीतिग्रन्थेषु सभापरिषदादिसंस्थानां .वर्णनं वर्तते, परं तासु संस्थासु सर्वसाधारण जनतायाः प्रवेश एव नासीत्। यदा कदा प्रवेशो भवेदपि तर्हि तेषां विचाराणां मतानां च महत्त्वं नासीद्, यतो हि तेषां शासनपद्धतिः प्रमुखतो राजतन्त्रात्मिका आसीत्। परं वेदेषु लोकतन्त्रात्मिका शासनपद्धतिर्वर्तते। इदमेव वेदस्य वैशिष्ट्यं पार्थक्यं च वर्तते। तस्मिन् काले नरमात्रानुकूलासु सभा-समितिषु पञ्चजनानां[4] प्रवेशः सरलतयासीत्। इमासु संस्थासु राजाधिकारिभिः सहैव सर्वे प्रजाप्रतिनिधयस्तिष्ठन्तिस्म। वेदेषु वेदोत्तरवर्त्तिसाहित्यवत् निरङ्कुशकठोरराजतन्त्रस्य विवरणं नैवोपलभ्यते। वेदोत्तरवर्त्तिषु ग्रन्थेषु वैदिकसमितेरभावो दृश्यते।

---

१. अथर्व० ७।१२।२।
२. यजुः ३।४५।
३. अथर्व० ७।१२।२।
४. 'त्वामिमाः प्रदिशः पञ्चदेवीः' अथर्व० ३।४।२, 'पञ्चजनाः' ऋ० १०।५३।४–५, निरुक्ते नैघण्टुकाण्डे ३।७।१–८।१।

## सङ्घटनसंस्थाया विकासः

अस्याः संस्थाया विकासः कदा, कुत्र कथं च संजात इत्यादिप्रश्नानां विचारे कृते सति विज्ञायते यदस्या मुख्याधारो जनसमूह एव आसीत्, अर्थादस्या उत्पत्तिर्मनुष्यस्य क्रमिकविकासान्तेऽभूदिति । यदा मानवः परिवारेण सह सुसम्बद्धः तदा समये समयेऽन्यैः परिवारैः सह सामूहिकरूपेण किञ्चित् किञ्चित् चिन्तयामास । विराड्वा इदमग्रे[1]–इत्यनेन व्यज्यते यदस्याः संस्थायाः प्रारम्भो ग्रामेण (समूहेन) सह सञ्जातः । सर्वविदितमस्ति यद् वैदिकसभ्यतायाः प्रारम्भो ग्रामात् प्रवर्तते । ग्रामेषु विविधानां परिवाराणां शान्तिसुरक्षार्थं, सुव्यवस्थितप्रकारेण सामाजिकनैतिकव्यवहारसम्पादनार्थं च तत्कालीनैर्जनैः अस्याः संस्थायाः सङ्घटनं कृतमित्यनुभूयते । प्रथमं तावद् विभिन्नपरिवाराणां प्रधानानि ( धीवानो, रथकाराः, कर्माराः, मनीषिणः ) सम्मिलिता बभूवुः यतो हि यावत् तेषां परिवाराणां कोऽपि सुनिश्चितः मार्गदर्शकः, शासकः, नेता वा समाजे सुप्रतिष्ठितो नासीत् । आसु संस्थास्वेकं वैशिष्ट्यमासीद्, यदिदं प्राथमिकं सङ्घटनस्य प्रयोजनमासीत् । अतस्ते वर्गदेशपक्षपातादिसङ्कुचितां विनाशिनीं च दुर्भावनां विहाय येन केनापि प्रकारेण कार्यसाधनमेव लक्ष्यं विधाय सर्वे सम्मिलिता बभूवुः । यद्यपि तेषां कार्यभेदेन वर्गभेद आसीत्, परं सर्वैः पञ्चजनैः सामूहिकरूपेण राष्ट्रोत्थान-भावनया मतैक्येन सङ्गतिकरणरूपे यज्ञे ( समूहे ) सामाजिकव्यवहारसम्पादनार्थं नीतिनिर्धारणार्थं निर्वाचनादिसम्पादनार्थं च कार्यं कृतम् । अयमेव वैदिकसमाजस्य श्रेष्ठ आदर्शः ।

## विविधाः सङ्घटनसंस्थाः

वेदेषु कार्यभेदानुसारेणास्याः संस्थाया विविधानि स्वरूपाणि दृश्यन्ते । तत्रापि अथर्ववेदे सामाजिक-शासकीयादिनीतिविधानानां च निर्धारिणीनाम्, विचार-विमर्शिनीनां संस्थानां विपुलाः समुल्लेखा लभ्यन्ते । यथा—१. सभा, २. समितिः, ३. आमन्त्रणम्, ४. विदथः, ५. चरणम्, ६. परिषद्, ७. सङ्घः, ८. हविर्धानम्, ९. अग्निशाला, १०. पत्नीसदनम्, ११. विशः, १२. वर्गः, १३. पूगः, १४. गणसभा, १५. संवेश्यम् राष्ट्रियसभा, १६. बृहद्राष्ट्रिया सभा, १७. विद्वत्सभा, १८. गुप्तमन्त्रणासभा, १९. स्त्रीसभम्, २०. ग्रामीणसभा, २१. धनिकसभा, २२. अरिसभा, २३. अनुमतिसभा, २४. अमावास्या, २५. पूर्णिमा, २६. राका, २७. इडा, २८. भारती, २९. सरस्वती, ३०. व्रात्यसभा, इत्येतादृश्यः संस्था दृश्यन्ते वेदेषु । संस्थानां प्रयोजनोपयोगयोरुदाहरणानि क्वचित् सूत्ररूपेण, क्वचिच्च विस्तरेणोपलभ्यन्ते ।

### सभा—

तत्र नीतिशास्त्रस्य सूत्रात्मकपद्धत्या 'विराट्' सूक्ते क्रमेण सभाशब्दः श्रूयते । सङ्घटनसूक्तेषु केषुचिन्मन्त्रेषु वा सभायाः, समितेः, आमन्त्रणस्य चैकस्थले निदर्शनं वर्तते । तत्रापि सभायाः प्रमुखं स्थानं वर्तते । वेदेषु, अथर्ववेदे

---

१. अथर्व० ८।१० ।

सभासमित्योर्यादृशं रोचकमालङ्कारिकं च वर्णनं वर्तते, तादृशं सुस्पष्टं सहजतयोपलभ्यं च वर्णनमन्यत्र क्वचिदपि नास्तीति। इदमथर्ववेदेस्यैव वैशिष्ट्यं वर्तते। तद्यथा—

सभा च मा समितिश्चावतां प्रजापतेर्दुहितरौ संविदाने।
येना संगच्छा उप मा स शिक्षाच्चारु वदानि पितरः संगतेषु ॥
विद्म ते सभे नाम नरिष्टा नाम वा असि।
ये ते के च सभासदस्ते मे सन्तु स वाचसः ॥
एषामहं समासीनानां वर्चो विज्ञानमाददे।
अस्याः सर्वस्याः संसदो मामिन्द्र भगिनं कृणु ॥
यद्वो मनः परागतं यद्बद्धमिह वेह वा।
तद्व आवर्तयामसि मयि वो रमतां मनः[1] ॥

तत्रादौ सूक्तस्य पदार्थविभागः क्रियते। प्रजापते राज्ञः सभा समितिश्चेमे दुहितरौ। इमे आद्यसंस्थे ये भारतीय-उषःकाले स्थापिते स्तः। इमे अन्वर्थके नामनी, यतो हि पितैव पुत्रीमुत्पादयति। अनेनोत्पादकर्तृत्वेनानयोरधिकारो राज्ञ उपर्यागच्छति। कीदृशोऽधिकारः? संरक्षणात्मक इति। 'पिता रक्षति कौमारे' इत्यनेन न्यायेनाविवाहितावस्थां यावत् पिता एव भवति यथार्थः संरक्षकः। परमिदमपि न विस्मर्तव्यं यत् कन्या पितुर्धनं न भवति। सा तु सर्वदा परकीया वर्तते। अर्थात् कन्यायाः पतिरन्यो भवति। एतत् सर्वमवधार्यैव भगवता यास्केन दुहितृशब्दोऽनेन प्रकारेण निरुक्ते व्याख्यातः 'दुहिता, दुर्हिता, दूरे हिता[2]' अनयोः संस्थयोर्यद्यपि राजा पितृत्वेन सम्बोधितः, तथापि राज्ञ उपरि सभासदामप्यधिकारो भवति। अत एव मन्त्रार्धे ते राज्ञः पितृत्वेन[3] समादृताः—'पितरः संगतेषु' इति। राजा सभादीनां जनकः सभासदां पुर उपस्थितः सन् तेभ्यो बहुमानं दत्त्वा प्रतिज्ञां करोति 'अहं चारु वदानि' इति। एते सभासदो न केवलं सामान्याः पितरः, अपि तु शिक्षिताः। यथा—'येना संगच्छा उप मा स शिक्षात्' अर्थाद् एते सभासदो राज्ञो गुरुस्थानीया भवन्ति। एभिः सः तेजसः, विज्ञानस्य च कामनामप्यकार्षीत्। यथा—'एषामहं समासीनानां वर्चो विज्ञानमाददे' इति। तत्र राज्ञोऽयं विश्वास आसीद् यदस्याः सभायाः सुसङ्घटनेन मम भाग्यं वर्धिष्यते। अहमस्याः सहभागी भवेयम्। अतः स सभासदो निवेदयति स्म—

अस्याः सर्वस्याः संसदो मामिन्द्र भगिनं कृणु।

अत्र 'अस्याः सर्वस्याः' इति मन्त्रे सभासमितिभ्यां साकं प्रायस्तदर्थक एवको

---

१. अथर्व० – ७।१२।१–४।

२. निरुक्तम् ३।१।४।

३. यतो हि एते राजानं निर्वाचयन्ति स्म, तं राज्यासने प्रतिष्ठापयन्ति स्म, अतस्तस्य पितरः।

नूतनः शब्दः 'संसदः' इति श्रूयते। अनेन निश्चीयते यद् वेदे नीतिशासनयोविविधानां विषयाणां विचार-विमर्श-नीतिनिर्धारणानां स्थलं 'संसद्'भवति स्म।

## संसद्—

आधुनिकराजनीतिशास्त्रविचारका मन्यन्ते यत् संसदो ज्ञानं प्रथमं पाश्चात्यैरेव कृतम्। अस्मिन् विषये आशीर्वाद-महोदयस्य सम्भ्रान्तमुदाहरणं पर्याप्तं विद्यते। स लिखति—'संसदः प्रादुर्भाव इंगलैण्डदेश एव संजातः[1]।' वेदे एव शब्दस्यास्योपलब्धेः कथनमिदं हास्यास्पदमेव। वस्तुतोऽयं तेषां विचारकाणां नास्ति दोषः। प्रायो राजनीतिशास्त्रविचारकाणामिदमनुमानमस्ति यद् राजनीतिशास्त्रस्योत्पत्तिर्भारताद् बहिः सञ्जाता। तेषामनुकरणं भारतीयैः कृतम्। किन्तु नै दुचितं, यतः कतिचिद्वर्षेभ्यः पूर्वं म० म० गणपतिशास्त्रिमहोदयानां कृपयाऽर्थशास्त्रस्य नाम सामान्यलोकेषु विश्रुतमासीत्। तेन अल्पसंख्यका एव भारतीयराजनीतिशास्त्रे पारङ्गता बभूवुः। प्रस्तुतः संसच्छब्द ऋगादिषु लभ्यते, तत्रापि स्पष्टतोऽथर्ववेदे। वेदानन्तरं काव्यादिग्रन्थेष्वपि शब्दोऽयं यत्र-तत्र लभ्यते। यथा—'तमद्भुतं संसदि रात्रिवृत्तं प्रातर्द्विजेभ्यो नृपतिः शशंस[2]' इति। वेदेषु[3] संसच्छब्दः—'संसद्', 'सप्तसंसदः[4]' इत्यादिरूपैः वर्तते। अर्थादस्य शब्दस्य वेदोत्तरग्रन्थेषु बहुशोऽलभ्यत्वाद् आधुनिका वास्तविकतां नाध्यगच्छन्। सभार्थकस्य संसच्छब्दस्य विविधानि रूपाणि वेदेषु लभ्यन्ते।

## नरिष्टा—

अस्याः सभायाः 'नरिष्टा' इति नाम ज्ञायते यस्याः सामान्योऽर्थो भवति अहिंसिता, परैरनभिभाव्या चेति। तथैव मानवानां नेतॄणां वा इष्टा प्रिया इत्यप्यर्थो भवितुं शक्यते। तात्पर्यतः इयं नरिष्टा अविनाशिका वर्तते यतोऽस्या विनाशं प्रजाजनोऽथवा स्वयं राजाऽपि कर्तुं नैव शक्नोतीति।

उपर्युक्तस्य सूक्तस्य विचारेणेदं सिद्ध्यति यत् सर्वसामान्यरूपेण राज्यशासनदृष्ट्यापि सामूहिकविचारविमर्शपूर्वको निर्णयः नीतिनिर्धारणं च भवति स्म यत्र समाजस्य राष्ट्रस्य च विभिन्नानां विषयाणां कृते पृथक् पृथक् संस्था अभवन्, यासां सभादीनि नामानि आसन् तासामेवाग्रे कश्चिद् विचारः क्रियते। तद्यथा—

---

१. राजनीतिशास्त्रम्—पृ० ३६५। विश्वहिन्दीकोशेऽपि लिखितमस्ति—७०० वर्षतः पार्लियामेण्टस्य हिन्दीरूपान्तरं संसद् इति दृश्यते।

२. रघु० १६।२४।

३. ऋ० ४।१।१८, तै० सं० ७।४।२।२–३,
अथर्व० २०।११०।२, २०।२९।५, २०।१३।३।

४. यजु० २६।१।

यूयं गावो मेदयथा कृशं चिदश्रीरं चित्कृणुथा सुप्रतीकम्।
भद्रं गृहं कृणुथ भद्रवाचो बृहद्वो वय उच्यते सभासु[1] ॥

अत्र सभाशब्दस्य अर्थः सामान्यजनसमूहो वर्तते। सभासु जनसमूहेषु गोदुग्धदध्यादिलक्षणमन्नं प्रशस्यते। अन्यत्र सभायां विध्वंसका विनाशार्थं कृत्याप्रयोगानपि कुर्वन्ति स्म। यथा—

यां ते चक्रुः सभायां यां चक्रुरधिदेवने।
अक्षेषु कृत्यां यां चक्रुः पुनः प्रति हरामि ताम्[2] ॥

वेदे सभायाः समुल्लेखो न केवलं सामान्यजनस्थलेषु द्यूतस्थलेषु वा आसीत्, परं विशिष्टानां विदुषाम्, प्रवचनपटूनाञ्च समुदायस्य कृतेऽपि भवति स्म। तद्यथा—एका पत्नी स्वपतिं मार्मिकतया वैदुष्यपूर्णवाचा सम्बोधयति—

अहं वदामि नेत्त्वं सभायामह त्वं वद।
ममेदसस्त्वं केवलो नान्यासां कीर्तयाश्चन[3] ॥

हे पतिदेव! गृहे स्थित्वा सम्भाषणस्य ममैवाधिकारो वर्तते (गृहिणो गृहमुच्यते)। त्वं गृहे तिष्ठन् निरर्थकं किमपि मा वद। त्वदधिकारः सभायां वर्तते। त्वद्भाषणं सभायामेव शोभनं भविष्यति।

विविधाभिः सङ्घटनसंस्थाभिः सह शिष्टतापूर्वकचारुभाषणस्य उल्लेखो यथा—

ये ग्रामा यदरण्यं याः सभा अधिभूम्याम्।
ये संग्रामाः समितयस्तेषु चारु वदेम ते[4] ॥

समिति-सेना-सुराभिश्च सार्धं सभायाः समुल्लेखो यथा—

तं सभा समितिश्च सेना च सुरा चानुव्यचलन्[5]।

विदथेन सह सभा, यथा—

यः सभेयो विदथ्यः सुत्वा यज्वाथ पूरुषः।
सूर्यं चामू रिशादसस्तद्देवाः प्रागकल्पयन्[6] ॥

सभाया विविधानां शब्दरूपाणामेकस्मिन्नेव मन्त्रे उल्लेखो यथा—

अपश्चा दग्धान्नस्य भूयासम्।
अन्नादायान्नपतये रुद्राय नमो अग्नये।
सभ्यः सभां मे पाहि ये च सभ्याः सभासदः[7] ॥

इत्थं विविधानां सभाशब्दस्थलानां सम्यगवलोकने कृते सति विज्ञायते यत्

---

१. अथर्व० सा० भा० ४।२१।६।
२. तत्रैव० ५।३१।६।
३. तत्रैव० ७।३८।४।
४. अथर्व० १२।१।५६।
५. तत्रैव० १५।९।२।
६. तत्रैव २०।१२८।१।
७. तत्रैव० १९।५५।५।

सभाशब्दो नास्ति निश्चितस्थलविशेषस्य ज्ञापकः। अस्तु, अधुनास्य शब्दस्य विविधैर्विचारकैः प्रदर्शितार्थो द्रष्टव्यः।

तत्र सायणमतानुसारेण सभायाः क्वचित् सामान्यजनसमूहः, विशेषेण 'विदुषां समाजः' इत्यप्यर्थो वर्तते। पारस्करगृह्यसूत्रे जयरामकृतटीकानुसारेण—'सह धर्मेण सद्भिर्वा भवतीति सभा'[१]। सभा ग्रामसभा आसीत्, समितिश्च राष्ट्रसमितिः अथवा राष्ट्रिया सभासीत्, ग्रामसम्मेलनेनैव सङ्ग्रामस्योत्पत्तिः[२]। सङ्ग्रामशब्दोऽपि सभया सम्बद्धोऽस्ति। सभा-समिति-विदथानां च निश्चितार्थो नास्ति। देशकालानुसारेणैतेषामर्थेष्वपि परिवर्तनं सञ्जातमिति सम्भाव्यते यतो ह्याधुनिकानां विदुषामपि विषयेऽस्मिन् मतैक्यं नास्तीति[३] तद्यथा केषाञ्चिद् वैदेशिकानां मतानि[४]—

( १ ) लुडविगमतानुसारेण—सभायां पुरोहितः, धनिकः उच्चवर्गीयाश्च सम्मिलिता भवन्ति स्म, 'समितौ' च साधारणा जनाः तिष्ठन्ति स्म।

( २ ) त्सिमरमतानुसारेण—'सभा' ग्रामसभासीत् समितिश्च समस्त-जनस्य केन्द्रियपरिषद् आसीत्।

( ३ ) हिलेब्राण्टमतानुसारेण—सभा समितिश्चैकैव ( संस्था ) आसीत् सभा तत्स्थलस्य नामासीद् यत्र जनाः सम्मिलिता भवन्ति स्म। समितिः नाम सम्मिलितः समूहः, एते विद्वांसोऽग्रे विदुषां कृते पृथग्रूपेण विदथस्य प्रयोगं कुर्वन्ति।

'प्राचीन भारत' में जनतन्त्र नाम्नि पुस्तके[५] लिखितंयद् यदा समाजे कुटुम्बावस्था समागता, तदा गृहपतिषु कदाचित् मतभेद-सम्भवः। एता-दृश्यामवस्थायां मतभेदं दूरीकर्तुं स्थानीया गृहपतयः सम्मिलिता अभवन्। तेषां पुरश्च वादिप्रतिवादिनः स्वान्-स्वान् मतभेदान् द्रढयितुं परस्परमाह्वयन्ते स्म। अनेन प्रकारेण गृहपतीनां सभायां वाद-विवादान्ते मतभेदा निराकृता अभवन्। अवस्थेयम् 'आहवनीय' इत्युच्यते स्म। अनन्तरीयावस्था दक्षिणाग्निरासीदिति।

तथैवात्र प्रयाजानुयाजहुतभागादिशब्दा[६] अपि द्रष्टव्याः। 'पञ्चप्रदिशः' इति शब्देन ग्रामीणानां प्रतिनिधीनां पञ्चानां भावो ज्ञायते यतो हि ग्रामसमितयो यत्र तत्र विभक्ता आसन्। पञ्चसमितय एव सम्मिल्य सभा इत्युच्यते स्म। अत एव सभा समितिश्च मन्त्रे एकस्मिन्नेव स्थाने पठिते। अनेन सिद्ध्यति यत्

१, पा० गृ० ३।१३।१।

२. अथर्ववेद—मातृभूमि और स्वराज्यशासन पृ० ५३।

३. प्राचीन भारतीय शासन पद्धति पृ० ९२—।

४. वै० को० पृ० ५४३—४४। ५. पृ० ४१।

६. येषां प्रयाजा उत वानुयाजा हुतभागा अहुतादश्च देवाः।
येषां वः पञ्च प्रदिशो विभक्तास्तान्वो अस्मै सत्रसदः कृणोमि॥ अथर्व० १।३०।४।

समितिरेकस्य वर्गस्य गणस्य वा प्रतिनिधीनां संस्थासीत्, यदा च सभायां समस्त-वर्गाणां प्रतिनिधय एकत्र स्थिताः भवन्ति स्म।

## समितिः—

यद्यपि सभाया इयं सहोदरी प्रसङ्गानुसारेण पूर्वमेव क्वचित् समासेन वर्णिता यस्या उत्पत्तिः सभासूक्तेऽत्रगता, तथापि सभातोऽस्याः किञ्चित् तात्त्विकं पार्थक्यं समासेनैत्र क्रियते। सर्वसाधारणजनसङ्घटनमेव समितिशब्देनोच्यते स्म। इयं समितिः सर्वसाधारणानां जनसङ्घटनरूपा सत्यपि महाधिकार-सम्पन्नासीत्। तत्र राज्ञो निर्वाचनप्रकरणेन विज्ञायते यदियं राज्ञो निर्वाचन-पुनर्निर्वाचनाधिकारिणाञ्च निर्वाचनाधिकारसम्पन्नासीत्। अनया संस्थया सह सर्वेषां विशां सम्पर्क आसीत्। अनेनानुमीयते यदियं साम्यवादस्य जनन्यासी-दिति। वैदिके साहित्ये साम्यवादस्य यादृशं सुस्पष्टं सरलं च चित्रणं लभ्यते, तस्यैव क्रमेण विकासो वर्तमानकालं यावत् सञ्जातः। यद्यपि क्वचित् क्वचित् तत्र विकृतिरपि दृश्यते या समाजस्याऽहितकरी वर्तते। समितिषु क्रियमाणानि आमन्त्रणादिसर्वकार्याणि च समानरूपेण भवन्ति स्म, यानि वर्गीयादिपक्षपात-विहीनानि भवन्ति स्म। अत्र सर्वेषामेकरूपतायाः, समानभाषणस्य समानमन्त्र-णायाश्चावसर आसीत् सर्वत्र[1]। सभा-समित्योर्विवेचनाय डा० जायसवालस्य विचारा मननीयाः सन्ति। सामान्यतः समितिः सर्वासां सङ्घटनसंस्थानां प्रतिनिधिरासीत्।

अस्यां संस्थायां राज्यसम्बन्धिनो विचारा अपि भवन्ति स्म। तत्र समितौ स्वयं कर्तव्यपरायणः सुयोग्यः राजा प्रतिष्ठते स्म। यथा—

परि सद्मेव पशुमान्ति होता राजा न सत्यः समितीरियानः।
सोमः पुनानः कलशाँ अयासीत्सीदन्मृगो न महिषो वनेषु[2]॥

अर्थात् सभायां परिषदि चानुपस्थितो राजा निर्बलः राजकीयलक्षणविही-नश्च मन्यते स्म। उपनिषत्स्वस्य राज्ञः स्पष्टोदाहरणानि लभ्यन्ते। तत्र सभादिषु समुपस्थितानां सर्वेषां कृते युक्तिसङ्गततर्कपूर्वक-चारुभाषणस्य समानरूपेण समादरपूर्वकं स्वातन्त्र्यमासीत्। उपनिषदनुसारेण सभादिषु सभ्यानां न केवलं पुस्तकपाण्डित्यस्य अपितु योग्यविचाराणामेव महत्त्वमासीत्।

सभा-समित्योः सङ्घटनम्—वैदिकं साहित्यं दृष्ट्वावगम्यते यत् तत्रास्याः संस्थाया विधिवत् सङ्घटनमासीत्। तत्र विविधार्थसूचकानां शब्दानां स्पष्टं विवरणं समुपलभ्यते। यथा[3]—सभा, शाला, सदस्याः, प्रतिनिधयः, सभापति-

---

१. समानो मन्त्रः समितिः समानी समानं व्रतं सह चित्तमेषाम्। अथर्व० ६।६४, ऋ० १०।१९१।३।

२. ऋ० ९।९२।६, तु० यत्रौषधीः समग्मत राजानः समिताविव।
विप्रः स उच्यते भिषग् रक्षोहामीव चातनः॥
तत्रैव १०।९७।६। वि० द्र० हिन्दू राज्यतन्त्र पृ० १४—१६।

३. वैदिकगृहनिर्माणप्रकरणे सच्छन्दः सभासूचकः प्रलक्ष्यते। यथा—हविर्धानमग्निशालं पत्नीना सदनं सदः। सदो देवानामसि देवि शाले॥—अथर्व० ९।३।७।

रित्यादयः। तत्र सभायाः सभापतिः[१] सर्वत्र दृश्यते। क्वचिदध्यक्षशब्देनापि सभापतेः सङ्केतो लभ्यते।

क्वचिद् विविधासु संस्थासु पुरोहित एवाध्यक्षोऽभूत यथा—

मगाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम।
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम[२]॥

अत्र राजा सङ्ग्रामादिषु विजयप्राप्त्यर्थमध्यक्षपदे प्रतिष्ठितमग्निस्वरूपं ब्राह्मणं प्रार्थयते, तथैव प्रत्यङ्गिरससूक्तेऽपि—

प्रतीचीन आङ्गिरसोऽध्यक्षो नः पुरोहितः।
प्रतीचीः कृत्या आकृत्यामून् कृत्याकृतो जहि[३]॥

अत्र कृत्यानिवारणार्थमध्यक्षस्थानीयं पुरोहितं ब्राह्मणं प्रति प्रार्थनायाः स्पष्टमुदाहरणं वर्तते। स्वयं राजा अपि प्रमङ्गानुसारेण अध्यक्षो भवति स्म। यथा—

आशानामाशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः।
इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम्[४]॥

अत्र चतसृणां दिशां केन्द्रभूतो राजा अध्यक्षरूपेणोक्तः। इयं 'केन्द्रीया सभा' इति वक्तुं शक्यते यस्या अयमध्यक्षः।

पूर्वमेवोक्तं यदासु सङ्घटनसंस्थासु विभिन्ना ग्राम-वर्गप्रतिनिधय उपतिष्ठन्ते स्म। तदा ग्रामसमवेताः सर्वे सम्मिल्यैव भ्रमन्ति स्म[५]। ग्राममवलम्ब्य दण्डादीनि कर्माणि भवन्ति स्म। ग्रामणीरेव ग्रामसङ्घटनस्य सर्वाधिकारी भवति स्म। ग्रामण्यनुसारेण ग्रामस्य नामानि भवन्ति स्म। यथा—देवदत्तो ग्रामणीरेषां त इमे देवदत्तकाः[६]। परस्परं निर्णयार्थं समुत्सुकाः सर्वे ग्रामाः सम्मिलन्ति स्म, तद्यथा—'सङ्ग्रामे संयत्ते समयः कामः'[७] आर्थीयैः सुहृद्भिरैकमत्यं समयः। शत्रुभिः सन्धिरित्यन्ये। इति भट्टभास्करमिश्राः।

सभ्याः—अथर्ववेदे सभासमित्योर्लक्षणं दृश्यते। यथा—

सोदक्रामत् सा सभायां न्यक्रामत्।
यन्त्यस्य सभां सभ्यो भवति य एवं वेद[८]॥

तथैव 'सामित्य' शब्दोऽपि बोद्धव्यः।

सभेयः—सभायां समुपस्थाता 'सभेयः' इत्युच्यते स्म। तद्यथा—

यः सभेयो विदथ्यः सुत्वा यज्वाथ पूरुषः।
सूर्यं चामू रिशादसस्तद्देवाः प्रागकल्पयन्[९]॥

---

१. सभाभवनस्य संरक्षकः।
'सभापतिभ्यश्च वो नमः'—यजु० १६।२४, तै० सं० ४।५।३।२, का० सं० १७।१३।

२. अथर्व० ५।३।१।
३. तत्रैव १०।१।६।
४. तत्रैव १।३१।१।
५. श० ब्रा० ४।१।५।२-७।
६. काशिका ५।३।११२।
७. तै० सं० २।१।८।४।
८. अथर्व० ८।१०।९-१०, सभ्यः सभां मे पाहि ये च सभ्याः सभासदः॥ तत्रैव १९।५५।५।
९. तत्रैव २०।१२८।१।

सभेयवद् 'विदथ्यः' अपि विज्ञातव्यः। शब्दोऽयमृग्वेदेऽपि श्रूयते[1]।

सभाचरः[2]—सायणभाष्यानुसारेणायं 'सभागः' वर्तते। अयं धर्मनिष्ठो भवति। अतोऽयं विधिविज्ञः सभासद् भवितुं शक्नुयात्। यथा—'यमस्य सभासदः'[3] अनेन यमपदेनानुमीयते यदयं नियामकाधिकारसम्पन्नः तच्छक्तिसम्पन्नो वा आसीत्। कात्यायन-मैत्रायण-तैत्तिरीयादिषु चायं शब्दः श्रूयते। सदसस्पतिशब्दोऽपि सभ्यार्थको वेदितव्यः।

सभासाहः—शब्दोऽयं सभास्थं सङ्केतयति[4]। अस्यैव समकक्षाः शब्दाः अन्यत्रापि श्रूयन्ते[5]। सभास्थाणुशब्दोऽपि वेदेषु लभ्यते। मन्येऽयं स्थाणुवत् सभा-सूपतिष्ठते यथा स्थाणुः स्वाभाविकेन भारेण सुनिश्चितो निश्चलश्च भवति तथैवायमप्यासीत्।

यस्मिन् राष्ट्रे सभासु ब्राह्मणाः (विद्वद्वर्गाः) पीडयन्ते तत्र न धन-धान्य-सुखसंवर्धिनी वृष्टिर्भवति, न राज्यानुकूला समितिरेव तिष्ठति। तद्यथा—

न वर्षं मैत्रावरुणं ब्रह्मज्यमभि वर्षति।
नास्मै समितिः कल्पते न मित्रं नयते वशम्[6]॥

राज्ञः स्थैर्यार्थं समितेरनुमतिरावश्यकी भवति। यथा—

सर्वा दिशः संमनसः सध्रीचीर्ध्रुवाय ते समितिः कल्पतामिह[7]।

सभायां पापकर्मणः पुरुषस्य प्रायश्चित्तस्य विधानं वर्तते। तत्र पापकर्मणो निन्दा भवति स्म। यथा—

यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये।
यदेनश्चकृमा वयमिदं तदवयजामहे स्वाहा[8]॥

श्री० अ० डांगेलिखिते भारते ग्रन्थे ६४ पृष्ठे सभा चर्चितास्ति। साम्यसङ्घ-स्योदाहरणमिदम्। एवमेव प्रसङ्गेऽस्मिन् इन्द्रसहस्राक्षशब्दावपि द्रष्टव्यौ। तत्रैव ६६ पृष्ठे षड्रात्रक्रतुः सारस्वतक्रतुश्चापि मननार्हौ।

आमन्त्रणम्—अतः परमत्र सभासमित्यर्थकानामन्येषां विशिष्टानां शब्दानां निर्देशः सङ्केतमात्रेण क्रियते। अस्मिन् क्रमे तृतीयस्थानमामन्त्रणस्य वर्तते। यथा-

सोदक्रामत् सामन्त्रणे न्यक्रामत्।
यन्त्यस्यामन्त्रणमामन्त्रणीयो भवति य एवं वेद[9]॥

---

१. ऋ० २।२४।१३ तु० तत्रैव १।९१।२० २. यजु० ३०।६, तै० ब्रा०—३।४।२।१।
३. अथर्व० ३।२९।१। ४. ऋ०—१०।७१।१०।
५. ऐ० ब्रा० पं० १ खं० १३।
६. अथर्व० ५।१९।१५। ७. तत्रैव ६।८८।३।
८. यजु० ३।४५। द्र० हिन्दू राज्यतन्त्र भा० १ पृ० १३।
९. अथर्व० ८।१०।१३।

'प्राचीन भारत में जनतन्त्र' नामके पुस्तके[1] अस्मिन् विषये अतीव रोचकविचाराः समुपलभ्यन्ते। सामान्यरूपेण सभा-समित्योः प्रचारानन्तरं विशिष्टानां कृते आमन्त्रणस्य प्रयोजनं सञ्जातम्। प्रकारान्तरेण इयमामन्त्रणीया संस्था--'कार्य-परिषद्' इव आसीदित्यनुमीयते। एतत्कालं यावत् समाजे ब्राह्मणादि-चतुर्वर्णानां समुचितो विकासः सञ्जातः।

सातवलेकरमहोदयानुसारेण[2] समस्तग्रामसभायाः (महासभायाः) समितेर्वा (राष्ट्रियाणां) प्रतिनिधीनां सारभूता विद्वांसो नेतारश्च निर्वाचिताः। तेषां समुदाय एव मन्त्रिमण्डलम्। इयं मन्त्रिपरिषद् एवामन्त्रणीयोच्यते। अत्र व्यवस्थितलोकशासनस्य सङ्केतो दृश्यते। अनया श्रुत्या मन्त्रणायाः मन्त्रिणाञ्च राजनीतौ महत्त्वपूर्णं स्थानं विज्ञायते।

**विदथम्—**

शासने सेनायाः प्रमुखं स्थानं भवति तदनुसारेणास्य सम्यक् सञ्चालनार्थं पृथक् परिषदः (संस्थायाः) प्रयोजनं स्वाभाविकम्। अत एव वेदेषु विदथ-नाम्नीयं विशिष्टा संस्था आवश्यकी जाता।

'राथ' महोदयानुसारेण अस्य शब्दस्यार्थः 'आज्ञा' वर्तते। यथा--'वायोः सवितुर्विदथानि मन्महे'[3]। ऋग्वेदेऽपि विदथसम्बद्धोदाहरणानि लभ्यन्ते। अस्य शब्दस्य एभिर्विचारकैः बहवोऽर्थाः—'आज्ञादात्री' 'सभा' इत्यादयो निर्धारिताः।

यां त्वा देवा असृजन्त विश्व इषुं कृण्वाना असनाय धृष्णुम्।
सा नो मृड विदथे गृणाना तस्यै ते नमो अस्तु देवि[4]॥

अर्थोऽयं सैनिकविषयसम्बद्धो मन्यते। ऋग्वेदेऽपि यत्र क्वचित् 'धर्मसभा' इत्यर्थो लभ्यते, तत्रैव युद्धार्थोऽपि। ओल्डेनवर्गमहोदयेनास्य शब्दस्य 'अभ्यादेश' इत्यर्थः कृतः। लुडविगमहोदयानुसारेणेयं सभा मघवतो ब्राह्मणानां च वर्तते। ब्लूमफील्ड-महोदयानुसारेण गृहम् इत्यर्थः। शब्दोऽयं ज्ञानयज्ञार्थकोऽपि स्वीकृतः क्वचित्[5]। विदथस्य विविधार्थकानि शब्दरूपाण्यपि अथर्ववेदे समुपलभ्यन्ते। यथा—

उद्यानं ते पुरुष नावयानं जीवातुं ते दक्षतातिं कृणोमि।
आ हि रोहेममम‍ृतं सुखं रथमथ जिर्विर्विदथमा वदासि[6]॥

---

१ पृ० ४१–४२।

२. अथर्ववेद–'मातृभूमि और स्वराज्यशासन' पृ० ५३।

३. अथर्व०–४।२५।१, तत्रैव–५।२०।१२, १८।३।७०।

४. अथर्व०–१।१३।४।

५ अथर्व० १।३२।१; ४।२५।१; ५।१२।७; ७।७३।४; ९।१४।२२; १७।१।१५; १८।१।२०; ३५; ३।१९।७०; यतो हि यज्ञशब्दः सङ्घटनार्थकः सर्वमान्यः। तदनुसारेण यज्ञार्थकस्य विदथशब्दस्यार्थः—विचारविनिमयस्थानमिति।
वैदिककोश पृ० ४८०; प्राचीन भारतीय शासन पद्धति पृ० ९२।

६. तत्रैव ८।१।६

यद्यप्यत्र मन्त्रस्थरथशब्दस्य सर्वैश्चिन्तकैर्दार्शनिकदृष्टया एव विचारः कृतः तथापि संग्रामदृष्टयापि रथशब्दस्य विचारः कर्तुं शक्यते। अनेन प्रकारेण रथ-शब्देन सह समागतस्य विदथशब्दात्मकमन्त्रस्यार्थः—वृद्धा सती त्वम् अपरान् जनान् दीर्घजीवनसम्पादनस्य रथारोहणस्य च ज्ञानमुपदेक्ष्यसि। एवमेव—

इमे जीवा वि मृतैराववृत्रन्नभूद्भद्रा देवहूतिर्नो अद्य।
प्राञ्चो अगाम नृतये हसाय सुवीरासो विदथमा वदेम॥
मृत्योः पदं योपयन्त एत द्राघीय आयुः प्रतरं दधानाः।
आसीना मृत्युं नुदता सधस्थेऽथ जीवासो विदथमा वदेम[1]॥

अत्र द्वाविंशतितमे मन्त्रे श्रेष्ठतमवीर्यशौर्यादिगुणसम्पन्नेन सता युद्धं करणीयमित्युपदेशः त्रिंशत्तमे च मृत्युमनादृत्य सम्भूय ज्ञानपूर्वकसम्भाषणस्योल्लेखो वर्तते।

विदथे स्त्रियः भाषणं कुर्वन्ति स्म। यथा—

भगस्त्वेतो नयतु हस्तगृह्याश्विना त्वा प्र वहतां रथेन।
गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमा वदासि॥
इह प्रियं प्रजायै ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि।
एना पत्या तन्वं सं स्पृशस्वाथ जिर्विर्विदथमा वदासि[2]॥

विंशतितमे मन्त्रे रथारोहणस्य यद् वर्णनं वर्तते तद् युद्धसन्दर्भं विहाय पत्न्याः पति-गृहगमनविषयकं वर्तते। तत्र विशेषेण स्त्रीणां कृते महत्त्वपूर्णोपदेशः—वशिनी गृहपत्नी त्वं परिवारे (समूहे) ज्ञानयुक्तं भाषणं कुरु। एकविंशतितमे मन्त्रे च तस्या एव कृते—गृहस्थाश्रमस्य सर्वतोभावेन वृद्धचर्थं सर्वदा जागरूकतायाः वृद्धत्वं यावत् सदुपदेशकरणस्य च उपदेशः। अत्र विदथशब्दः तत् स्थानं सङ्केतयति यत्र पारिवारिकप्रश्नानां समाधानार्थं वरिष्ठजनाः सङ्घटिताः भवन्ति स्म, पत्युः गृहग्रामनगरजनपददेशादेः नीत्याचारविचारादिविषयकनिर्णयस्थानं वा सङ्केतयति।

एवमेव शत्रुसेनात्रासनसूक्तान्तर्गते मन्त्रेऽपि विदथशब्दः युद्धक्षेत्रीयार्थको विज्ञायते। यथा—

अच्युतच्युत्समदो गमिष्ठो मृधो जेता पुरएतायोध्यः।
इन्द्रेण गुप्तो विदथा निचिक्यद्धृद्द्योतनो द्विषतां याहि शीभम्[3]॥

श्राद्धकर्तारः प्रायः पितॄन् प्रार्थयन्ते—वीरं मे दत्त पितरः इति। अथर्ववेदस्य पितृमेधसूक्तेऽपि विदथेऽस्याः कामनायाः सङ्केतो वर्तते। यथा—

अकर्म ते स्वपसो अभूम ऋतमवस्रन्नुषसो विभातीः।
विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः[4]॥

१. तत्रैव १२।२।२२; ३०; अपि च २०।३४।१८।
२. तत्रैव १४।१।२०–२१। ३. तत्रैव ५।२०।१२।
४. तत्रैव १८।३।२४।

विंशतितमकाण्डस्य त्रिंशत्तमे सूक्तेऽपि विदथशब्दः दृश्यते[१]। सूक्तमिदं मुख्यतः युद्ध(संघर्ष)विषयकं वर्तते। अतोऽत्रस्थस्यापि विदथशब्दस्य युद्धविषयक-विचारविमर्शस्थानमित्यर्थः कर्तुं शक्यते।

इमान्युदाहरणान्यवलोक्य निश्चीयते यदनेन शब्देन सह युद्धस्य सेनायाश्च समीपतरसम्बन्धोऽस्ति। शब्दोऽयं यद्यपि 'विद् ज्ञाने' धातोः वर्तते परमस्य प्रयोगः विशेषेण युद्धप्रसङ्ग एव दृश्यते। अनेन सिद्धयति यद् वेदे युद्धसेनाविषयकमन्त्रालयः तत्सम्बद्धा सभा वा विदथशब्देन व्यवह्रियते स्म।

## स्त्रीसभम्—

सभासु स्त्रीणामधिकारः पर्याप्तमुपलभ्यते, यद्यपि पुरुषाणामेव प्रमुखं कार्यमासीत् सभासु। समये समये स्त्रियो युद्धकर्मण्यपि विविधेषु स्थलेषूपस्थिता वेदेषु दृश्यन्ते। 'पत्नीनां सदनम्' इदं स्त्रीसभं प्रतीयते। यथा—

हविर्धानीनामग्निशालं पत्नीनां सदनं सदः।
सदो देवानामसि देवि शाले[२]॥

## चरणम्—

इदं शिक्षासंस्थायाः सङ्घटनं विज्ञायते। प्रातिशाख्यं चरणव्यूहश्च चरण-स्यैवोदाहरणम्। वैदिकविद्यालयस्य एकं नाम 'चरणम्[३]' इति विज्ञायते। इयमेव विद्वत्परिषदपि वक्तुं शक्यते। यथा—

यदस्मृति चकृम किं चिदग्न उपारिम चरणे जातवेदः।
ततः पाहि त्वं नः प्रचेतः शुभे सखिभ्यो अमृतत्वमस्तु नः[४]॥

चरणमित्यस्य सम्प्रदायशाखा इत्यपरपर्यायः।

अथर्ववेदस्य ब्रह्मचारिसूक्ते[५] 'ब्रह्म इव आचरणं यस्य' इति विग्रहेण चरण-शब्दोपरि विचारो लभ्यते। तत्र चरणादिषु शिक्षासंस्थासु आचार्याः आचरका-श्छात्राः अभिभावकाश्च सम्मिल्य सदाचरणाः सन्तो विमृशन्ति स्म। यथा—

एवा नूनमुप स्तुहि वैयश्व दशमं नवम्।
सुविद्वांसं चर्कृत्यं चरणीनाम्[६]॥

चरकशब्दोऽप्यनेन किञ्चित् सम्बद्धः प्रतीयते[७]।

---

१. प्र ते महे विदथे शंसिषं हरी प्र ते वन्वे वनुषो हर्यतं मदम्।
घृतं न यो हरिभिश्चारु सेचत आ त्वा विशन्तु हरिवर्पसं गिरः॥
अथर्व० २०।३०।१।

२. अथर्व० ९।३।७।
३. जातककालीन भारतीय संस्कृति पृ० २५; ९५।
४. अथर्व० ७।१०६।१।
५. तत्रैव ११।५।
६. तत्रैव २०।६६।२।
७. वैदिक इण्डेक्स भा० १ पृ० २६८।

**परिषद्—**

इयमपि सभैका । यथा—

सुकर्माणः सुरुचो देवयन्तो अयो न देवा जरिमा धमन्तः ।
शुचन्तो अग्निं वावृधन्त इन्द्रमुर्वीं गव्यां परिषदं नो अक्रन्[1] ।।

अपि च—हरिश्मशारुर्हरिकेश आयसस्तुरस्पेये यो हरिपा अवर्धत ।
अर्वद्भिर्यो हरिभिर्वाजिनीवसुरति विश्वा दुरिता पारिषद्धरी[2] ।।

ऋङ्मूलकोऽयं परिषच्छब्दो विदुषां विधिज्ञानाञ्च सभां सङ्केतयति[3] ।

सामान्यतया सङ्घशब्दोऽपि सभासूचकः । अस्य शब्दस्य सामान्यतया 'समूह' इत्यर्थो वर्तते ।

**हविर्धानम्—**

श्रौतयज्ञानां परिचर्यास्थानम् अथवा यत्र हवनीयद्रव्यं सम्पद्यते तत् स्थानं हविर्धानमित्युच्यते । वैदिकशालाप्रकरणे शब्दोऽयं श्रूयते[4] । अग्निशालाशब्दोऽप्यनेनैव सम्बद्धोऽस्ति ।

**विशः—**

सामान्यतया विश्शब्दस्यार्थो वर्तते प्रजा । परं वैदिकानुसन्धानान्ते विज्ञायते यच्छब्दोऽयं जातिविशेषस्य प्रतिनिधिः वर्तते । पुरुषसूक्तावलोकनेन विज्ञायते यत् तत्र क्रमेण ब्राह्मण-क्षत्रिय-वैश्यानां यः सङ्केतः सः सामाजिकसुव्यवस्थायै एव । यथा ब्राह्मणक्षत्रियौ विद्यायुद्धयोः प्रतिनिधी तथैव वैश्योऽर्थवाणिज्ययोः प्रतिनिधिरस्ति, यः कृषिगोरक्षापशुपालनशिल्पकलादीनाञ्चाधिकारी स वैश्यवर्णः । अनेन सिद्ध्यति यद् विशः व्यवसायिनां सङ्घो वर्तते[5] । वर्ग-पूग-मण्डल-यज्ञ-शब्दा अपि समूहवाचका वर्तन्ते सामान्यतया[6] ।

**गणसभा—**

वैदिकशासनतन्त्रे गणशब्दस्य पर्याप्तं महत्त्वं वर्तते । वस्तुतो गणशब्दः एकतन्त्रशासनस्य विशिष्टः प्रतिनिधिशब्दोऽस्ति । अनेनैव आर्यदेवस्य गणेशस्य

---

१. अथर्व० १८।३।२२ । २. अथर्व० २०।३१।३ ।

३. प्राचीन भारत में राज्य और न्यायपालिका—विविधेषु पृष्ठेषु । 'जातककालीन भारतीय संस्कृति' पृ० २५ ।

४. अथर्व० ७।१०९।३, ९।३।७, १४।२।३४ ।

५. बृहदारण्यकोपनिषदि अस्य विस्तृतं सुस्पष्टञ्च निरूपणमस्ति । तथैव श्रीमद्भागवते ११।१७।१३, अर्थशा० ( १।४।१ ), एतद्विषयकेषु अन्येषु ग्रन्थेषु च अस्योदाहरणानि स्पष्टं लभ्यन्ते । द्र०—प्राचीन भारत में जनतन्त्र पृ० ३८–४०, जातककालीन भारतीय संस्कृति पृ० ११७ । प्रजार्थक'विश'शब्देनैव विश्पतिरग्निरुच्यते ।

६. द्र० डा० वासुदेवशरण कृत 'पाणिनीय शोधनिबन्ध' ।

महत्त्वं सूचयते। तत्र केचन जनाः गणपतिमवैदिकं मन्यन्ते भ्रमेण। (तत्र भ्रम-निवारणार्थं गणपतिशास्त्रि-हेब्बार-(श्रीकृष्ण)-महोदयेन 'गणेश'(सम्पूर्ण कुतर्ककर्तन)पुस्तके प्रभूता सामग्री सन्निविष्टा)। वेदेषु अष्टवसुगणस्य, एकादशरुद्रगणस्य, द्वादशादित्यगणस्य, त्रयोदशविश्वेदेवगणस्य, ऊनपञ्चाशद्-मरुद्गणस्य च विपुलं वर्णनं वर्तते। गणसभायां सभासदां निश्चितसङ्ख्यायाः सङ्केतो वर्तते यत्र स्व-स्व-विभागकार्यकर्तॄणां समुदायो मिलतिस्म[1]। गुप्तमन्त्रणासभेयमेकान्तस्थले प्रमुखाधिकारिणां भवति स्म।

## ग्रामसभा——

ग्रामीणानाम्, धनिकानाम्, शत्रूणाञ्चापि सभा वर्तन्ते यासु काश्चन गतार्थाः काश्चिच्च वक्ष्यमाणाः। ग्रामसङ्कटकः ग्रामणीः, ग्रामणीशब्दोपरि 'ग्राम'-शब्दस्य प्रयोगः काशिकायाम् (५।३।११२), तत्र ग्रामाणाम्, वणिजाम्, दार्शनिका-नाम्, राजनीतिज्ञानाञ्च प्रतिनिधयस्तिष्ठन्ति स्म। अथर्ववेदे सभाशब्देन सह ग्रामशब्दस्यापि प्रयोगो लभ्यते। यथा——

ये ग्रामा यदरण्यं याः सभा अधि भूम्याम्।
ये संग्रामाः समितयस्तेषु चारु वदेम ते[2]॥

सम्भवतः सभाग्रामशब्दयोः सहप्रयोगस्य तात्पर्यमिदमेव।

## ग्रहनक्षत्राणां सम्मेलनम्——

आर्यैः आकाशीयग्रहनक्षत्राणां स्थितिं गतिञ्चावलोक्यैव स्वसमाजस्य सुव्यवस्था कृतेति प्रतीयते। मन्ये, अत्र सूर्यचन्द्रयोर्भोगकालावस्थामवलम्ब्य मासस्य प्रमुखयोः पर्वतिथ्योः (अमावास्यायाः पूर्णिमायाश्चेति) भेदः कृतोऽस्ति। तत्र श्रौते इमे तिथी देवतात्वेन स्वीकृते। वैदिकवाङ्मये अनयोः कृते आहुतीनां विधानं श्रूयते। अमावास्यायाः पूर्णिमायाश्च भेदावपि ब्राह्मणादिषु श्रूयेते। सिनीवाली कुहूश्च अमावास्यायाः, अनुमतिः राका चेति पूर्णिमायाः। यथा—या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राकेति या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूः[3]। एभिरनुमत्यादिशब्दैः सभाविषयकः सङ्केतो लभ्यते।

अमावास्या——[4]अथर्ववेदस्य अमावास्यासूक्तमवलोक्य ज्ञायते यदत्र मिषात् सम्मेलनस्य महत्त्वं ज्ञापितम्। अमावास्यायां सूर्येन्दुसङ्गमः परस्परविरुद्धसम्मेलनं सूचयति।

पूर्णिमा——[5]शब्दोऽयं सम्पूर्णत्वं सूचयति।

---

१ प्राचीन भारत में जनतन्त्र पृ० ३५, भारतीय संस्कृति पृ० ३०।

२. अथर्व० १२।१।५६। ३. गो० ब्रा० २।१।१०; ऐ० ब्रा० अ० ३२ खं० ११;

४. अथर्व० ७।७९; वि० द्र० अथर्ववेद-मेधाजनन, संगठन और विजय।

५. अथर्व० ७।८०।

अनुमतिः—[1]शब्दोऽयं आनुकूल्यं सूचयति। एवमेव राकासूक्ते[2] पूर्णत्वस्य सुमतेः प्रसन्नतायाश्चोल्लेखः—

डा० देवीदत्तशुक्लमहोदयेन 'प्राचीन भारतमें जनतन्त्र' नामके पुस्तके (पृ० ५३) मही ज्ञानस्य प्रकाशिका उत्तमोपायस्योपदेशं च ददाना इडा सरस्वती भारती सभा च। तद्यथा यजुर्वेदे—

तिस्रो देवीर्बर्हिरेदं सदन्त्विडा सरस्वती भारती।
मही गृणाना[3]॥

इत्युल्लेखः कृतः।

भारती—इयं विदुषां सभा सर्वोच्चा।

सरस्वती—इयं दुष्टानां विनाशकारिणी, विद्वद्भिः सुव्यवस्थिता राष्ट्रस्य प्रबन्धकारिणी चासीत्।

इडा—वसूनाम् अर्थात् राष्ट्रवासिनां धात्री तथा च इडा गृहस्थानां प्रबन्धकारिणी श्रूयते।

**व्रात्यः—**

तत्र पुराणादिग्रन्थेषु 'व्रात्यः संस्कारहीनः'[4] इत्युक्तम्। परं वेदेषु शब्दस्यास्य विशिष्टं महत्त्वं श्रूयते। व्रातस्य पर्यायः-समूहः समाजः सङ्घश्च। यो व्राताय हितः स व्रात्यः। व्रते भवः व्रात्यः समूहपालकः पतिः स्वामी वा, व्रतार्थं समर्पितः इति वा विविधाः अर्थास्सन्ति। अथर्ववेदे ब्रह्मविद्याप्रकरणे पञ्चदशकाण्डमवलम्ब्य सातवलेकरमहोदयेन विषयेऽस्मिन् सुविचारः कृतः, योऽतीव मननोयः।

**निष्कर्षः—**

इत्थं सभा-समितिविषये उपलब्धां सामग्रीं विलोक्य विज्ञायते यद् वेदे सभा-समित्योर्विशिष्टं महत्त्वमासीत्। अथर्ववेदेऽपीमे प्रजापतेः दुहितरौ स्तः इत्युल्लिखितम्। इमे आद्ये संस्थे वर्तेते। अपराण्युदाहरणान्यपि विलोक्य विज्ञायते यत् सभा-समित्योः तादृशं स्थानं नासीत् यादृशं प्रारम्भे। यतो हि क्रमिकविकासान्ते इमे सर्वसामान्यजनसमूहस्य कृतेऽपि उपयुज्येते स्म। यद्यपि सभा समितिश्च विशिष्टविदुषां न्यायकर्तॄणां कृते उक्ते। क्वचित् सामान्यजनसमूहस्य कृतेऽपि अनयोरुपयोगः कथितः। परमग्रे पृथक् पृथग् विदथामन्त्रणचरणादिसंस्थानां स्पष्टं विवरणं लभ्यते। अतः सिद्धयति यदिमे सर्वकालं नास्तां समुल्लिखितार्थे। यथा यथा रूपान्तरं सञ्जातं तथा तथा अनयोर्महत्त्वं न्यूनं सञ्जातम्। इदं तु सत्यं यत् प्रारम्भिके काले यदा अन्याः संस्थाः नासन् तावच्चिरमनयोरेव महत्त्वमासीत्। सभा-समित्योः सर्वत्र मिश्रितं विवरणमुपलभ्यते। यद्यपि पृथक् पृथग् वर्णनमपि विद्यते क्वचित्, परं नास्ति तदित्थं निर्णयात्मकम्। इदं तु सत्यमेव यदिमे आद्ये। इमे सर्वासां संस्थानामुपजीव्ये स्तः। सभा विस्तृता, बहुजनानां समुदाय आसीत्, समितिश्च शाखारूपेण सीमिता भवति स्म। ● ●

---

१. अथर्व० ७।१२०
२. अथर्व० ७।४८।
३. यजु० २७।१९।
४. 'व्रात्यः संस्कारहीनः स्याद्' इत्यमरः २।७।५४।

# पञ्चमोऽध्यायः

## न्यायो नीतिश्च

**न्यायः—**

राजराज्ययोरधिकारकर्तव्योद्देश्यादिवर्णने न्यायस्याप्युल्लेखो वर्तते। यत्र तत्र प्रसङ्गतो राज्ञः प्रमुखोद्देश्येषु न्यायोऽप्यावश्यको मन्यते विद्वद्भिः। राजा न्यायाधीशस्यापि कार्यं करोति स्म। राजाऽदण्ड्यः[1]। अपराधिनां निग्रहो वस्तुतस्तस्य प्रशासनान्तर्गतमासीत्। सूत्रग्रन्थानुसारमपराधिनां वैयक्तिकं न्यायं कश्चिद् राजपदाधिकारी, राज्ञः प्रतिनिधिर्वा करोति स्म। राजन्यः शूद्रस्य दण्डकः कथ्यते[2]। नागरिकन्यायस्य विषये गुप्तचराणामाश्रयेण राजा केवलमन्तिमं निर्णयं विदधाति स्म। किन्त्विदमनिश्चितं वर्तते। ऋग्वेदस्य 'मध्यमशीः' सम्भवतो जनताया न्यायाधीशोऽभवद्, आसीदथवायं मध्यस्थः। अपराधानां न्यायाधिकरणस्य समर्थनस्योल्लेखो वरुणप्रकरणे विद्यते[3] यतो हि वरुणो मानवीयराजप्रतिकृतिः वर्तते। सम्भवत ईदृशानां गुप्तचराणामुपयोगो युद्धावसरेऽपि भवति स्म।[4] उपर्युक्तैः प्रमाणैर्वैदिको राजा न्यायेन न्यायप्रक्रियया वा विहीन इति वक्तुं नैव शक्यते।

वरुणस्य सम्पूर्णवर्णनेन व्यज्यते यद् वरुणो वैदिकवाङ्मये न्यायस्य, न्यायप्रक्रियाया वा सर्वोच्चाधिकार्यासीत्[5]। यद्यपि मनुभीष्मकौटिल्यैरस्मिन् विषये उत्तरोत्तराधिकाधिका सुस्पष्टा सरला विपुला च सामग्री प्रदत्ता, तथाप्येतस्य सर्वस्य मूलं वेद एव वर्तते। [6]न्यायशब्दस्य स्पष्टोल्लेखस्तैत्तिरीयसंहितायां लभ्यते। विद्वांसः तं प्रायः धर्मार्थे स्वीकुर्वन्ति। न्यायसभासु न्यायार्थं तत्तद्विषयाणां प्रस्तावनाया उल्लेखः ऋग्वेदे[7] लभ्यते। इत्थं वैदिकसाहित्ये न्यायस्य, न्यायपालिकायाः, न्यायालयस्य, न्यायाधीशस्य, सम्बद्धकर्मचारिणाञ्चोल्लेखो वर्तते। वेदेषु न्यायकर्ता 'मध्यमशीः' कथ्यते[8] स्म इति पूर्वोक्तमेव।

---

१. श० ब्रा० ५।अ० ४।४।७। द्र० वैदिक कोष पृ० ४४२।

२. काठकसंहितायाम् २७।४, तु० क्षत्रियः।

३. ऋ० १।२५।१३, ४।४।३, ६।६७।५, ७।६१।३, ७।८७।३, १०।१०।८, १०.९७।१२।

४. तत्रैव ८।४७।११।

५. अस्य निबन्धस्य ऋतप्रकरणम्।

६. द्र० वैदिके कोषे न्यायशब्दविवरणम्।

७. ऋ० १०।३४।

८. वैदिककोष पृ० ३६५।

तद्यथा—

यस्याञ्जन प्रसर्पस्यङ्गमङ्गं परुष्परुः ।
ततो यक्ष्मं वि बाधस उग्रो मध्यमशीरिव[1] ॥

तथैव 'मध्यमस्थ-मध्यमेष्ठ' शब्दावपि उपर्युक्तार्थे वर्तेते[2] । यथाथर्ववेदे—

धाता रातिः सवितेदं जुषन्तामिन्द्रस्त्वष्टा प्रति हर्यन्तु मे वचः ।
हुवे देविमदितिं शूरपुत्रां सजातानां मध्यमेष्ठा यथासानि[3] ॥

पुराकाले न्यायस्यार्थः 'धर्म' इति गृह्यते[4] स्म । इत्थमयं धर्मशब्दः न केवलमृगादिषु संहितासु क्वचिन्न्यायवाचको लभ्यते परमस्य प्रयोगो ब्राह्मण-सूत्रादिग्रन्थेष्वपि प्राचुर्येण लभ्यते । यत्र धर्मशब्दः मुख्यतः कर्तव्यार्थ एव विज्ञायते तत्र मैत्रायणीकाठकीयसंहितादिषु शब्दोऽयं व्यवहार-विषयकार्थे विद्वद्भिरन्वेषितोऽस्ति[5] । शब्दोऽयं वेदमूलको वर्तते ।

## व्यवहारः—

वेदोत्तरवर्तिसाहित्ये धर्मशब्दवत् प्राचुर्येण व्यवहारशब्दोऽपि लभ्यते । कात्यायनानुसारेण—

वि नानार्थेऽवसन्देहे हरणं हार उच्यते ।
नानासन्देहहरणाद् व्यवहार इति स्मृतः[6] ॥

महाभारते व्यवहारस्य वेदमूलकत्वं दृश्यते[7] । वेदे सद्व्यवहारस्योल्लेखः शब्दान्तरेण वर्तते । अस्यैव वेदमूलकस्य व्यवहारशब्दस्य सूत्रादिषु[8] कार्यानुष्ठानम्, न्यायिकप्रशासनम्, वैधप्रक्रिया, विवादादयश्चार्थाः कृताः ।

न्यायाधिकारी—वेदेषु न केवलं न्यायस्य अथवा तद्वाचकयोर्धर्मव्यवहारयोः सङ्केता लभ्यन्तेऽपितु न्यायिकप्रक्रियायां समागतानां विविधानामधिकारिणां साधनानां च वर्णनं लभ्यते । यथा 'स्थपतिः' न्यायाधिपतित्वं न्यायाधिकारित्वं वा सूचयति । अथर्ववेदे परवर्तिसाहित्ये च शब्दोऽयं विपुलतया उपर्युक्तार्थे लभ्यते । अथर्ववेदीयौ समुल्लेखौ यद्यपि क्रिमिनाशनप्रसङ्गे श्रूयेते तत्राप्यस्यार्थो राज्ञ अनन्तरं न्यायाधिकरणस्याध्यक्षः इति सूच्यते—

---

१. अथर्व० ४।९।४, तथैव ऋ० १०।९७।१२, यजुर्वेदेऽपि १२।८६ ।

२. वैदिककोष ।

३. अथर्व० ३।८।२; तथैव यजु० २७।५; तै० सं० ४।४।५।१ ( तु० मध्यमशी ) ।

४. वैदिककोष । पी० वी० काणे कृत धर्मशास्त्र का इतिहास ।—प्राचीन भारत में राज्य और न्यायपालिका पृ० ४५ ।

५. वैदिककोष २१४ ।

६. मनु० ८।९ कुल्लूकभट्टस्य टीकायाम् ।

७. व्यवहारस्तु वेदात्मा भेदप्रत्यय दृश्यते । व्यवहारः स्मृतो यश्च स वेदविषयात्मकः ॥ महा० शा० १२१।५१, ५३ ।

८. द्र० प्राचीन भारत में राज्य और न्यायपालिका पृ० २६० ।

हतो राजा क्रिमीणामुतैषां स्थपतिर्हतः।
हतो हतमाता क्रिमिर्हतभ्राता हतस्वसा[१] ॥

अनेनैव प्रकारेण सन्दर्भेऽस्मिन् प्रश्न-प्रतिप्रश्न-प्रश्निन्-अभिप्रश्निन्-प्रश्नविवाक-प्रतिभृत-प्राश-प्रतिप्राशादयः शब्दा ज्ञातव्याः। 'प्रश्नम् एति' अस्यार्थः विवादास्पदे विषये निर्णयं पृच्छति। याजुषसंहितायां पुरुषमेधप्रकरणे प्रश्निनोऽभिप्रश्निनः प्रश्नविवाकस्य चोल्लेखो वर्तते। यथा—

उत्सादेभ्यः कुब्जं प्रमुदे वामनं द्वार्भ्यः स्रामं स्वप्नायान्धमधर्माय बधिरं पवित्राय भिषजं प्रज्ञानाय नक्षत्रदर्शमाशिक्षायै प्रश्निनमुपशिक्षायाऽअभिप्रश्निनं मर्यादायै प्रश्नविवाकम्[२]।

प्राशप्रतिप्राशौ—अथर्ववेदे प्राशप्रतिपाशौ वादिविवादिनोः कृते विज्ञायेते। यथा—

नेच्छत्रुः प्राशं जयाति सहमानाभिभूरसि।
प्राशं प्रतिप्राशो जह्यरसां कृण्वोषधे[३] ॥

तथैव—तस्य प्राशं त्वं जहि यो न इन्द्राभिदासति।
अधि नो ब्रूहि शक्तिभिः प्राशि मामुत्तरं कृधि ॥[४]

तत्रैव विशेषेण प्रतिपाशशब्दः प्रतिप्रश्निनः कृते वर्तते। सूक्तेऽस्मिन् सप्तमे मन्त्रे सामर्थ्यपूर्वकं भाषणं स्वपक्षपोषणार्थकं सूचयति यद् वादे आवश्यकं भवति। एवमेव उपस्तयः-उपस्तीन्-उपस्ति-शब्दा[५] अपि बोद्धव्याः।

तथ्यसङ्ग्रहार्थं न्यायसभायां वादप्रतिवादावावश्यकौ। एतदर्थं न्यायप्रक्रियायां प्राड्विवाकशब्दो लभ्यते। वेदेषु शब्दोऽयं प्रश्नविवाकत्वेन वर्तते यस्योल्लेख उपरि कृतः। वेदेषु प्रकारान्तरेण वदधातोर्वचधातोश्च विविधानि रूपाणि लभ्यन्ते। यथा परिवाद-वाद्यादिषु विवावदत-विवावचादयः शब्दाः। इमे सम्भवतः न्यायप्रक्रियान्तर्गता भवेयुः। इदं विद्वद्भिर्विचारणीयम्।

व्यवहारे न्यायाधीशस्य पुरस्तात् साक्षी आवश्यको भवति। वेदेषु प्रारम्भावस्थायां दिव्यसाक्षिणः सङ्केतो लभ्यते। यथा—

आ दधामि ते पदं समिद्धे जातवेदसि।
अग्निः शरीरं वेवेष्ट्वसुं वागपि गच्छतु[६] ॥

अथर्ववेदे साक्षिशब्दस्य बहूनि रूपाणि लभ्यन्ते। यथा—

---

१. अथर्व० २।३२।४, तत्रैव ५।२३।११, द्र० वैदिककोष पृ० ५८२।

२. यजु० ३०।१०, तै० ब्रा० ३।४।६।१, अत्रानेन वादिप्रतिवादिन्यायाधीशानामपि बोधो भवति।

३. अथर्व० २।२७।१।

४. तत्रैव २।२७।७।

५. तत्रैव ६।१५।१, ३।५।६–७।

६. तत्रैव २।१२।८; ऋ० १।१५८।४–५, ३।५३।२२।

तयाहं शत्रून्त्साक्ष इन्द्रः सालावृकां इव ।
प्राशं प्रतिप्राशो जहि०...................... ॥
सपत्नहा शतकाण्डः सहस्वानोषधीनां प्रथमः सं बभूव ।
स नोऽयं दर्भः परि पातु विश्वतस्तेन साक्षीय पृतना पृतन्यतः[1] ॥

इत्थं न्यायप्रक्रियान्तर्गता विपुला सामग्री वेदेषूपजीव्यत्वेन बहुत्र वर्णिता लभ्यते ।

## वेदे नीतिभेदानां चर्चा—

परिभाषा—'एवं कर्तव्यमेवं न कर्तव्यमित्यात्मको यो धर्मः सा नीतिः'[2] इत्यनुसारेण वेदे एव सर्वप्रथममेतदर्थकानि स्थलानि प्राचुर्येण लभ्यन्ते । तत्र टिप्पण्यां निर्दशिते पुस्तके षट्षष्ट्युत्तरशतसङ्ख्यकानां नीतिविधायकानां सिद्धान्तानां निर्देशः ।

वेदेषु यद्यप्याधुनिकग्रन्थेष्विव साक्षान्नीतिशब्दो न लभ्यते परं तस्य मूलम्, विविधार्थाः उपयोगाश्चापरशब्दैस्तत्र विपुलतया लभ्यन्ते । 'वैदिकसम्पत्ति' पुस्तके[3] नीतिशब्दमवलम्ब्य ऋगादिभ्यो मन्त्रानुद्धृत्य वेदेषु नीतेः प्रतिपादनं प्रदर्शितम् । यथा 'भवा सुनीतिरुत वामनीतिः' ।[4] यजुर्वेदादिषु याः तिस्रः शासकीयाः संस्था[5] वरुणपरिचये उल्लिखितास्तासां नीत्यर्थेऽप्युपयोगो भवितुं शक्नोति । यथा सरस्वती उत्तमा विद्या, भारती सङ्ग्रहणशक्तिः, इडा पृथ्वी-पालनञ्च[6] ।

नारदः—नारदशब्दोऽपि नीत्यर्थकः प्रतिपादितः । यथा—

वशां च विद्यान्नारद ब्राह्मणास्तर्ह्येष्याः ।,
देवा वशामयाचन्यस्मिन्नग्रे अजायत ।,
तामेतां विद्यान्नारदः सह देवैरुदाजत ॥
या वशा उदकल्पयन्देवा यज्ञादुदेत्यः ।
तासां विलिप्त्यं भीमामुदाकुरुत नारदः ॥
तां देवा अमीमांसन्त वशेयामवशेति ।
तामब्रवीन्नारद एषा वशानां वशतमेति ॥
कति नु वशा नारद यास्त्वं वेत्थ मनुष्यजाः ।
तास्त्वा पृच्छामि विद्वांसं कस्या नाश्नीयादब्राह्मणः ॥,

---

१. अथर्व० २।२७।५, तथैव १९।३२।१०; 'दिव्यार्थम्' द्र० धर्मशास्त्र का इतिहास पृ० ७५१, तथैव सभ्यन्यायाधीशार्थमपि तत्रैव पृ० ७५७ ।
२. द्याद्विवेदकृता सभाष्या नीतिमञ्जरी पृ० १ ।
३. 'शासनार्थोऽपि' पृ० ६६९ ।
४. ऋ० ६।४७।७ । तत्रैव 'यत्र ब्रह्म च क्षत्रञ्च' यजु० २०।२५ ।
५. अस्यैव निबन्धस्य पृ० ३० ।
६. अथर्व० ५।३।७; १।२।८ ।

**नमस्ते अस्तु नारदानुष्ठु विदुषे वशा ।**
**कतमासां भीमतमा यामदत्वा पराभवेत् ।।[१]**

नारं नयं नीतिं ददातीति, हे नयप्रद विद्वन् ! इति। पुराणेषु नारदस्य कुशलनैतिक-व्यवहारः प्रसिद्ध एव। तथा चायं सर्वश्रेष्ठसूचनाप्रसारकः वार्ता( समाचार )-सङ्कलकश्चासीत् ।

क्वचित् 'त्रिसन्धि' शब्दोऽपि नीत्यर्थे स्वीक्रियते विद्वद्भिः[२] । यथा—

**सर्वे देवा अत्यायन्तु त्रिषंधेराहुतिः प्रिया ।**
**संधां महतीं रक्षत ययाग्रे असुरा जिताः[३] ।।**

अत्र 'सं-धा' इत्यस्य सन्धिः संविदा वार्थोऽवबुध्यते। जयविषयप्रतिज्ञामिति सायणः।

सामादयः—केषाञ्चिद् विदुषां मतं वर्तते यद् वेदेषु [४]सामादीनामपि वर्णनं वर्तते। यद्यपीमान्युदाहरणानि सर्वार्थतः स्पष्टानि वर्गीकृतानि च राज्यशासनोपकारकाणि न सन्ति तथापि वेदेषु सामशब्दस्य विशिष्टं महत्त्वं वर्तते। अस्य नैकविधार्थाः लभ्यन्ते कोशेषु[५]। तथापि शतपथस्य इदं वचनं विशेषतोऽनुकूलं प्रतिभाति । यथा—

**एष उ एव साम। वाग्वै सा। अमैषः। सा चामश्चेति तत्साम्नः सामत्वम्। यत् उ एव समः प्लुषिणा समो मशकेन। समो नागेन। सम एभिस्त्रिभिर्लोकैः। समोऽनेन सर्वेण। तस्मात् उ एव साम[६]। तथैव— साम्राज्यं वै साम[७]।**

अत्र साम्नः साम्राज्यमित्यर्थं स्वीकृत्य सर्वत्र समभावोऽर्थः स्वीक्रियते चेदयं राजनीतेः कृते उपयोगी भविष्यति। कोषेऽस्यार्थाः[८] शान्तिरुपायाः संविदा कोमलतादयो लभ्यन्ते। कौटिल्यादिप्रयुक्ते उपायचतुष्टयेऽप्ययं प्रथमः। 'साम'-शब्दो न केवलं वेदमूलकः अपितु प्रमुखेषु चतुर्वेदेष्वयमेको वेदः। इदमेवास्य शब्दविशेषस्य वैशिष्ट्यं वर्तते। वस्तुत उपायचतुष्टये सर्वसुलभत्वात् सहज-साध्यत्वात् सर्वोपकारकत्वाच्चायं महत्त्वपूर्णोऽस्ति ।

दानम्—सामानन्तरं दानोपायः पठ्यतेऽर्थशास्त्रादिषु। दानस्याभिप्रायः 'नृम्णम्'शब्देनाभिव्यज्यते। अथर्ववेदे[९] शब्दोऽयं बहुशः प्रयुक्तः। अत्र 'नृम्णम्'—

---

१. अथर्व० १२।४।१६; २४; ४१–४३; ४५; अपि च तत्रैव ५।१९।९ ।
२. अथर्व० ११।९।२३, १०।२, ९, १८, वैदिकसम्पत्ति पृ० ६७५ ।
३. तत्रैव ११।१०।१५ । अपि च तै० सं० १।७।८।४, तै० ब्रा० १।७।१।६; २।१।१।३; कौ० उ० ३।१ ।
४. अथर्व० १०।८।४१, ११।३।१५, ७।५, १२।१।३८ ।
५. वैदिककोष पृ० ५५४ ।
६. बृ० उ० १।१।२४ ।
७. श० ब्रा० १२।८।३।२३ ।
८. संस्कृतहिन्दीकोष पृ० १०९८ ।
९. अथर्व० २०।३४।१, ६७।६, १०८।१, १३९।२, ४।२४।३, ८।५।२१, १०।५।१–६ ।

पदेनेदृग्व्यवहारस्य परिज्ञानं भवति यद् येन ( व्यवहारेण, धनादिदानेन ) शत्रुरपि मित्रं स्वपक्षीयो वा भवेत् ।

भेदः—अर्थशास्त्रानुसारेण 'शङ्काजननं निर्भर्त्सनं च भेदः'[1] इति भेदस्य लक्षणं वर्तते। वेदेष्वस्य पोषकाः प्रचुरा मन्त्रा लभ्यन्ते। यद्यपि 'भेद'शब्दो व्यक्तिवाचकत्वेनैव कोशे[2] स्वीक्रियते तथापि शब्दस्यास्य स्वभावगुणादिमूलके विचारे कृते सति सिद्धयति यदयं मूलतः परस्परभेदनार्थे प्रयुक्तः पश्चात् व्यक्ति-वाचको बभूवेति। भेदस्योदाहरणानि शत्रुनिवारणसम्मोहनपापमोचनराज-कर्तव्यादिसूक्तेषु लभ्यन्ते ।

दण्डः—वेदेषु दण्डशब्दो लभ्यते परं तस्य वर्गीकरणं प्रकारादयश्च व्यव-स्थितरूपेण नैव लभ्यन्ते। आधुनिका विधिज्ञाः दण्डस्य चत्वारः सिद्धान्ता इति मन्यन्ते[3]–प्रतीकारात्मकोऽवरोधको निरोधकः शिक्षणात्मकश्च। दण्डसिद्धान्ता-द्व्यतिरिक्तः प्रायश्चित्तस्यापि सिद्धान्तो वर्तते। तत्र प्रायश्चितं पापसम्बद्धम्, दण्डश्चापराधसम्बद्धः ।

उपर्युक्ताश्चत्वारः प्रकारा वेदमूलका एव। अथर्ववेदे दुष्टनाशनादिषु सूक्तेष्वस्मिन् विषये विपुला सामग्री लभ्यते। अत्र तेषु चातनर्षिलक्षितानि दुष्ट-लक्षणदण्डविधानादीन्युदाहरणानि पुरःस्थाप्यन्ते समासेन ।

दुष्टवाचकानि[4]—दुर्हार्दः, रक्षः (राक्षसः), असुतृप, घूर्वन्, भङ्गुरावत्, अभिदासन्, हिंस्रः (शरुः), शफारुज्,रिषः, क्रव्यात्, क्रविष्णुः, आमादः,यः पौरुषेयेण अश्व्येन क्रविषा, यः पशुना समङ्क्ते, दुरेवाः अदितये आवृश्चन्ताम्, किमीदिन्, यातुधानाः, गवां विषं भरन्ताम्, अदेवीः मायाः, वृजिनः, वाचास्तेनः, मूरदेवः, सहमूरः, मिथुनाशपातः ।

दण्डविधानवाचकानि[5]—रक्षोहा, अयोदंष्ट्रः, क्रव्यादः अपिधत्स्व, अवरं परञ्च दंष्ट्रौ उपधेहि, यातुधानान् जम्भैः संधेहि, यातुधानस्य त्वचं भिन्धि, हिंस्रः—अशनिः एनं हरसा हन्तु, पर्वाणि प्रशृणीहि, क्रविष्णुः क्रव्याद् एनं विचिनोतु, यातुधानं विध्य, हृदये विध्य, एषां बाहून् प्रतिभिन्धि, यातुधानान् ऋषिभिः स्पृणुहि, यातुधानान् निर्जहि (आमादः एनीः अदन्तु),रक्षः प्रति शृणीहि, पृष्टीः हरसा शृणीहि (यातुधानस्य मूलं वृश्च), यातुधानं नियुङ्ग्धि, यातुधानान् हृदये विध्य, असुतृपः पराशृणीहि, वाचास्तेन मर्मन् शरवः ऋच्छन्तु, यातुधानः प्रसितिम् एतु, तेषां शीर्षाणि वृश्च, यातुधानः उस्रियायाः संवत्सरीणं पयः माशीत्, यतमः पीयूषं तितृप्साद् तं मर्मणि विध्य, अघशंसं दहन्तु (धूर्वन्तं न्यासे), रक्षसः

१. कौटिल्य २।१० ।

२. वैदिककोष पृ० ३५८, ऋ० ७।१८।१८–१९, ३३।३, ८३।४, अथर्व० १२।४।५० ।

३. प्राचीन भारत में राज्य और न्यायपालिका पृ० २२५ ।

४. अथर्व० ८।३–४ सूक्तौ ।

५. तत्रैव ८।३ ।

प्रतिजहि, दुर्हार्दम् अभिदासन्तं विनङ्क्ष्व इत्यादि। अपि च[1] दुर्जनलक्षणानि—द्वयाविनः मनस्येकं वचस्येकमिति कपटभावयुक्तः। शपनेन शशाप। अघं मूरम् आदधे। रसस्य हरणाय जातं तोकम् आरेभे। यातुधानीः पुत्रं स्वसारं नप्त्यम् अत्ति। विकेश्याः मिथः विघ्नतां वितृह्यन्ताम् इत्यादि। अस्मिन् सूक्ते स्त्रीणामपि सामाजिक-पारिवारिक-नैतिकादिदोषाणां स्पष्टं वर्णनं वर्तते। अपि च[2] दुष्ट-लक्षणानि—तमोवृधः, अचित्, अत्रिन्, अघः, अघशंसः, ब्रह्मद्विषः, दुष्टकृत्, द्रुहः, अनृतेभिर्वचोभिः अभिचष्टे,असतः वक्ता, ये एवैः वि हरन्ते,स्वधाभिः भद्रं दूषयन्ति, स्तेनः, स्तेनकृत्, रिपुः, मिथुया धारयन्, अनृतदेवः, देवान् मोघमूहे, द्रोहवाक्,रक्षः, शुचिरस्मि इति आह, अयातुं यातुधान इत्याह, तन्वं गूहमाना नक्तं प्रजिगाति, दिप्सुः, पिशुनः, हविर्मथिन्, कोकयातुः शुशुलूकयातुः, उलूकयातुः, गृध्रयातुः, सुपर्णयातुः, श्वयातुः, मायया शाशदानः इति।

वधदण्डप्रयोगाः[3] यथा—अत्त्रिणः हतं, न्योषतं, अघशंसं तर्हणं वधं वर्तय-तम्। द्रुहः भङ्गुरावतः रक्षसः हतम्। रक्षः हन्ति, असद् वदन्तं हन्ति, तं महता वधेन हन्तु, पिशुनेभ्यो वधं शिशीते, रक्षोभ्यो वधः, दुष्कृतं अनारम्भणे तमसि वव्रे प्रविध्यतम, सा अनन्तं वव्रम् अवपदीष्ट, अग्नितप्तेभिः अश्महन्मभिः तपुर्वधेभिः अत्रिणः विध्यतम्, यातुमद्भ्यः अशनिं सृजत्, यातुमद्भ्यः अशनिम-स्यतम्, मूरदेवा विग्रीवासः ऋदन्तु, तान् निर्ऋतेः उपस्थे आदधातु, द्रोघवाचः निर्ऋतं सचन्ताम्, ग्रावाणः रक्षसः उपब्दं घ्नन्तु, दृषदा इव रक्षः प्रमृण, यातूनां पराशरः अभवत्, रक्षसः भिन्दन् एतु, अचितः परा शृणीतं मुदेथाम्, यतः एषां पुनः एकश्चन न उदयत्, यातुमावत् रक्षो नः मा अभिनड्, किमीदिनः मिथुना अपोच्छन्तु, रक्षः तपतं उब्जतम्, अघशंसमघं तपुः यस्यत्, ब्रह्मद्विषे क्रव्यादे घोरचक्षसे किमीदिने अनवायं द्वेषो धत्तमिति।

पापिनः अधोगतिः[4]—अस्य यशः प्रतिशुष्यतु, यः दिवानक्तं दिप्सति सः अधः अस्तु। स्तेनकृत् स्तेनः रिपुः दभ्रम् एतु, स तन्वा तना च निहीयताम्। स दशभिः वीरैः वि यूया। विश्वस्य जन्तोः अधमः पस्पदीष्ट इत्यादि लभ्यते।

आत्मदण्डः[5]—यदि यातुधानोऽस्मि, यदि वा पुरुषस्य आयुः तपत, अद्य मुरीय, इत्याद्युपर्युक्तेभ्यः शब्देभ्यः वाक्येभ्यश्च वेदोक्तपापस्य (दुष्कृतस्य), तत्कृते दण्डस्य च पर्याप्तान्युदाहरणानि दृश्यन्ते एवमेव 'अद्भ्यस्त्वा राजा वरुणो ह्वयतु[6] इति वरुणशासनस्य 'देश'सीमित्वात् तथा पूर्वोक्तरात्रिकाल सीमितत्वाच्च, मन्ये स्वेच्छयाऽनेन वरुणेनात्मदण्डः स्वीकृत इवेति। यद्यपि तद् वर्गीकृतं नास्ति परं तत्र वैविध्यमवलोक्य निश्चीयते यत् तद्विषयके स्वतन्त्राध्ययने कृते सति एकं

१. तत्रैव १।२८।१; ३; ४।
२. तत्रैव ८।४।
३. तत्रैव ८।४।४; ७; १३।
४. अथर्व० ८।४।१०, ११, १५, १६।
५. तत्रैव ८।४।१५ अपि च ५।५।४; ८।२७; १८।२।५।
६. तत्रैव ३।३।३।

विशिष्टं विस्मृतं ज्ञानं पुनः स्मृतिपथमागत्य सर्वोपकारकं भवेदिति। केषाञ्चिद् विदुषां[1] मतेन बलस्यान्तर्भावो दण्डेऽस्ति।

उपर्युक्तानां नीतीनामतिरिक्तान्युदाहरणानि च स्फुटरूपेण वेदेषु लभ्यन्ते। यथा—वर्पनीतिः[2]। अस्मिन्नेव सन्दर्भे बलेरुकबलगादिशब्दा अपि विचारणीयाः। तथैव छर्दनीतिशब्दोऽपि।

## वेदे व्यावहारिकनीतयः—

वेदस्य क्वचित् क्वचिद् व्यावहारिकोपदेशाः अर्थं दृष्ट्या महत्त्वपूर्णा वर्तन्ते येषामन्तर्भावः व्यावहारिक्यां नीत्यां भवितुमर्हति। यथा–अन्यो अन्यं न जानात्, स चित्तानि मोहयतु[3]।

एवमेव—यत् संयमो न वि यमो वि यमो यन्न संयमः।
इन्द्रजाः सोमजाः आथर्वणमसि व्याघ्रजम्भनम्॥[4]

अस्य मन्त्रस्य तात्पर्यं वर्तते—यः संयतोऽस्ति स नैव दण्डनोयः तथा यः असंयतोऽस्ति स सर्वथैव दण्डनोयोऽस्ति। अस्या नीतेः पार्श्वे इन्द्रनीतेः, सोमनीतेः आथर्वणनीतेश्च सङ्केतो लभ्यते। मन्ये एताः राज्यशासननीत्यां सुप्रसिद्धा आसन्। सम्भवत एतेषां मूलग्रन्था अवश्यमेव स्युः येषामन्वेषणं महदुपकारकं भविष्यति। वेदेषु दौर्बल्यभावनायाः सर्वतः निषेधोऽस्ति[5]। काचित् स्त्री कश्चित् पुमान् वा नीतिविरुद्धो दुर्व्यावहारिको वा भवेच्चेत् स सर्वथैव दण्डनोयः। यथा—

यदि स्त्री यदि वा पुमान्कृत्यां चकार पाप्मने।
ताम् तस्मै नयामस्यश्वमिवाश्वाभिधान्या[6]॥

नीतिनिपुणानां सर्वत्र सर्वदा च सत्कारः कर्त्तव्यः। विद्वद्भिरपि सर्वदा सद्व्यवहारेण वर्तनीयम्।

युद्धादिषु अन्येषु महत्त्वपूर्णस्थलेष्वपि शत्रूणां बुद्धिविचारादिपरिवर्तनार्थं ढक्कावादनादीनां चापि प्रयोगो वेदेषु विपुलतया लभ्यते[7]।

उपर्युक्तवर्णनानुसारेण सिद्धं यत् अथर्ववेदे महत्याः कठोरतायाः श्रेष्ठकुशलतायाः गोपनीयतायाश्च स्पष्टतास्त्येव। येन विज्ञायते यद् नीतिज्ञैरीदृशं व्यवहर्तव्यं, यस्य सङ्केतोऽवशेषो वा कदाचिद् केनचिद् वा कदापि न विज्ञातुं शक्यो भवेत्।

## वेदेषु करचर्चा—

करग्रहणस्य परम्परा वेदादेव प्रचलिता लभ्यते। तत्र करशब्देन सह वक्ष्यमाणानां सामान्यार्थकानां बलिशुल्कादीनां पर्यालोचनेनावगम्यते यदयं करः अपराधिनां कृते दण्डरूपेण स्थितः। तथा चानेन राजकीयकोषस्यार्थव्यवस्थाया अपि सम्पन्नता भवति स्म तदानीन्तनानां राजशासनानाम्। वैदिको राजा

---

१. हिन्दूराज्य० पृ० ४१–४६। २. ऋ० ५।६।२५; ३।२।१५; अथर्व० २०।११।३।
३. अथर्व० ३।२।१–६; ३।१९।३; ८। ४. तत्रैव ४।३।७।
५. तत्रैव १७।१।१२। ६. तत्रैव ५।१४।६।
७. तत्रैव ५।२०–२१।

शासनाधिकारी दण्डाधिकारी वा न केवलं शारीरिकदण्डे अपितु अर्थादिभिरपि अपराधिनः दमयतिस्म। आर्थिकपक्षेणापि राजा प्रजायाः पालनं सर्वसंरक्षकत्वं च निर्वहति। एतदर्थं प्रजा तस्मै करं ददाति। अर्थाद् यथा राज्ञः प्रजापालनरूपो धर्मः भवति तथैव प्रजानामपि भवति करदानस्य कर्तव्यता। अनया व्यवस्थयैव प्रचलति स्म तत्कालीनो व्यवहारः राजप्रजयोरिति। मन्वादिना प्रोक्ताः करशुल्कबलिशब्दा वेदमूलका एव। यथा—

योऽरक्षन्बलिमादत्ते करं शुल्कं च पार्थिवः।
प्रतिभागं च दण्डं च स सद्यो नरकं व्रजेत्[1]॥

अत्र मेधातिथिः—बलिः धान्यादेः षष्ठो भागः। करः द्रव्यादानम्। शुल्कम् वणिक्प्राप्यभाग इति।

विविधाः कराः—अथर्ववेदे विविधानां कराणां स्पष्टोल्लेखा लभ्यन्ते। तत्र तेषामुपयोगस्य परिमाणादेश्चापि सङ्केताः सन्ति। तद्यथा—'यद् राजानो विभजन्त' इत्यारभ्य 'प्रजया प्रतिगृह्य वि राधिषि'[2] इत्यन्तेन सूक्तेन प्रदर्श्यते। तत्र सायणभाष्यम् यथा—

यद्राजानो विभजन्त इष्टापूर्तस्य षोडशं यमस्यामी सभासदः।
अविस्तस्मात्प्र मुञ्चति दत्तः शितिपात्स्वधा॥ १॥

यमस्य धर्मराजस्य अमी दक्षिणस्यां दिशि द्युलोके परिदृश्यमानाः सभासदः सभायाम् उपविष्टा दुष्टनिग्रहे शिष्टपरिपालने च नियुक्ता राजानः राजमाना ईश्वरा वा देवाः इष्टापूर्तस्य। इष्टं श्रुतिविहितं यागादिकर्म। पूर्तं स्मृतिविहितं वापीकूपतटाकादिनिर्माणलक्षणं कर्म। तस्य उभयविधस्य कर्मणः षोडशम् षोडशसङ्ख्यापूरकं यत् पापं विभजन्ते पुण्यराशेर्विभक्तं कुर्वन्ति। अयम् अर्थः। श्रुतिस्मृतिविहितकर्मसु अनुष्ठीयमाणेषु प्रमादालस्यादिना क्रियान्पि पापस्य षोडश्या कलया अंशः समुपजायत एव तद् यमस्य सभ्याः परिशोधयन्ति। षोडशम् इति। षोडशसङ्ख्यायाः पूरकः 'तस्य पूरणे डट्', 'षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च' इति उत्वष्टुत्वे। तस्मात् राजभिर्विभज्य गृहीतात् पापात् अस्मिन् सवयज्ञे दत्तः अविः[3] अस्मान् प्रमुञ्चतु। यद्वा इष्टापूर्तस्य साधकं षोडशम्। 'षोडशकलो वै पुरुषः'[4] इति श्रुतेः षोडशकलम् आत्मानं यमस्य सभासदः अमी राजानः यन् विभजन्ते पशुशरीराद् विभक्तं कुर्वन्ति अविः अविशरीराभिमानी आत्मा तस्मात् शरीरवियोगजनिताद् दुःखात् प्रमुञ्चतु प्रमुक्तो भवतु। शितिपात्[5] श्वेतपात् स

१. मनु० ८।३०७, तथैव ७।१११, १२९, १३९–१४०।
२. अथर्व० ३।२९।१–८, सायणभाष्यसहितम्।
३. 'दत्तो हविः' पाठान्तरम्। ४. तै० ब्रा० १।७।५।५।
५. शितिपात् (शीर्यते इति शितिः हिंसनम्, शितिं पातयति) अनया व्युत्पत्त्याऽयं विनाशकालीनः प्रजायाः रक्षाकरः सम्भाव्यते।

दत्तोऽविः, स्वधा अन्ननामैतत् । यमसम्बन्धिभ्यः सभासद्भ्यः अन्नं भवतु । यद्वा स्वधेति पितॄणां हविर्दाने । 'स्वधाकारो हि पितृणाम्'[1] इति श्रुतेः । हविष्ट्वेन दत्तो भवतु ।

तात्पर्यम्—नियमानुकूलं वर्तमानस्यास्य राज्ञो नियुक्ता जना अत्रोल्लिखिता यमस्य सभासदः इव अन्नादेः षोडशांशं गृह्णन्ति । अनेन करस्वरूपेण लब्धद्रव्येण राष्ट्रसंरक्षणं प्रजापालनं दुष्टनिग्रहणादिकं च भवति ।

सर्वान्कामान्पूरयत्याभवन्प्रभवन्भवन् ।
आकूतिप्रोऽविर्दत्तः शितिपान्नोप दस्यति ॥ २ ॥

आभवन् आ समन्ताद् भवन् व्याप्नुवन् । प्रभवन् फलदानाय समर्थो भवन्, भवन् वर्धिष्णुः सन् क्रियमाणोऽयं यज्ञः अस्मदीयान् सर्वान् कामान् पुत्रपश्वादिविषयान् पूरयति सम्पूर्णान् करोति । आकूतिप्रः इदं मे स्याद् इति ये सङ्कल्पास्ता आकूतयः । ताः पूरयतीति आकूतिप्रः शितिपाद् श्वेतपाद दत्तः अस्मिन् यज्ञे प्रापितोऽयम् अविः । नोपदस्यति नोपक्षीयते । अपि तु यथाभिलाषं वर्धत इत्यर्थः ।

तात्पर्यम्—अनेन करदानेन समस्तानां सङ्कल्पानां पूर्तिर्जायते । चौराः दस्यवः अन्ये हिंसकाः शत्रवश्च राज्यभयेन पलायन्ते । फलतः सर्वैः सह राष्ट्राभिवृद्धिर्जायते । करदाता सर्वदा राजनियमैश्च निर्भयः सन् स्वसमृद्धिं करोति । अत्र अविस्थाने हविः इति पाठान्तरं, तत्र हविःशब्देन करो गृह्यते स च कुत्रचित् अव्यादि पशुरूपं च उपलक्ष्यते ।

यो ददाति शितिपादमविं लोकेन सम्मितम् ।
स नाकमभ्यारोहति यत्र शुल्को न क्रियते अबलेन बलीयसे ॥ ३ ॥

यो यजमानः शितिपादम् श्वेतपादं, लोकेन लोक्यमानेन फलेन, सम्मितम् सम्यक् परिच्छिन्नम् अमोघफलम् । यद्वा अनेन भूलोकेन सम्मितम् सदृशम् । भूलोकवत् सर्वफलप्रदम् इत्यर्थः, ईदृशम अविं ददाति प्रयच्छति स दाता नाकम् । कम् सुखम् तद्विपरीतम् अकं दुःखम्, न विद्यतेऽस्मिन् अकम् इति नाकः स्वर्गः । उक्तं हि—

दुःखेन यन्न सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम् ॥

ईदृशं लोकम् अभ्यारोहति अभिप्राप्नोति । तं लोकं विशिनष्टि । यत्रेति । यत्र यस्मिन् लोके अबलेन अपर्याप्तबलेन पुरुषेण, बलीयसे बलवत्तराय बलवच्छब्दाद् ईयसुनि 'विन्मतोर्लुक्' इति मतोर्लुक् । तादृशाय शुल्को न क्रियते शुल्को नाम अधिकबलस्य राज्ञो[2] न्यूनबलेन परिसरवर्तिना अन्येन राज्ञा देयः करविशेषः ।

तात्पर्यम्—शुल्कमिदं सर्वैः सम्मानितं मतैक्येन स्वीकृतं यः शत्रुनाशकाय

---

१. तै० ब्रा०– ३।३।६।४ । २. अत्र द्विविधयो राज्ञोः अर्थो ध्वन्यते ।

शासकाय समर्पयति सः स्वर्गं याति राजदण्डादिना निर्भयः सन् तिष्ठतीत्यर्थः। अनेन अविप्रदानेन सः निर्बलः सन् अपि बलवत्तरैः हठात् न विलुण्ठ्यते।

अत्र मेधातिथेर्मानवभाष्यानुसारम्[1] शुल्कशब्दस्य वणिक्प्राप्यः भागः इति अर्थे कृते सति एवं ज्ञायते यत् तस्मिन् कालेऽपि आयकरः (इन्कमटैक्स) आसीत्।

**पञ्चापूपं शितिपादमविं लोकेन संमितम्।**
**प्रदातोप जीवति पितृणां लोकेऽक्षितम्॥ ४॥**

पञ्चसङ्ख्याका अपूपा यस्य पशोश्चतुर्षु पादेषु नाभ्यां च निहिता वर्तन्ते तं पञ्चापूपं शितिपादं श्वेतपादं लोकेन पृथिव्यादिकेन संमितं सदृशम् अवस्थितं (अविं) प्रदाता प्रकर्षेण ददत् पितॄणां वस्त्रादिरूपं प्राप्तानां लोके सोमलोकाख्ये स्थाने अक्षितं क्षयरहितं फलम् उपजीवति उपभुङ्क्ते। संमितं प्रदातेति। तृन्नन्तत्वात् 'न लोकाव्यय०' इति कर्मणि षष्ठ्या निषेधे द्वितीयैव भवति। अक्षितम् इति। क्षि क्षये। भावे निष्ठा। 'निष्ठायाम् अण्यदर्थे' इति पर्युदस्तत्वाद् दीर्घाभावात् 'क्षियो दीर्घात्' इति दीर्घोपजीविनो नत्वस्यापि अभावः।

पञ्चापूपः—पूयते विशीर्यते इति पूपः। न पूपः अपूपः। पञ्चानाम् अपूपः पञ्चापूपः।

**पञ्चापूपं शितिपादमविं लोकेन संमितम्।**
**प्रदातोप जीवति सूर्यामासयोरक्षितम्॥ ५॥**

पादत्रयस्य स एवार्थः। (सूर्यामासयोः) मस्यते क्षयवृद्धिभ्यां परिमीयत इति मासः चन्द्रमाः। मसी परिणामे इत्यस्मात् कर्मणि घञ्। सूर्यश्च मासश्च सूर्यामासौ। 'देवताद्वन्द्वे च' (पा० ६।३।२६) इति पूर्वपदस्य आनङ्। सूर्याचन्द्रमसोर्लोके अक्षितम् क्षयरहितं फलम् उपभुङ्क्त इत्यर्थः। अनयोश्चतुर्थीपञ्चम्योरीषद्भेदात् एकत्वाभिप्रायेण पञ्चर्चेनेत्युक्तम्।

चतुर्थपञ्चममन्त्रतात्पर्यम्—(४) ब्राह्मणादिपञ्चजनानां पतनाद्रक्षकः, लोकैः संमितः[2], हिंसकानां विनाशकः यथार्थतः संरक्षकः अयं करः, तं यः शासकाय समर्पयति सः पितृलोके अक्षय्यम् उपजीवति। (५) तथैव सूर्यचन्द्रयोः सान्निध्ये स सर्वदा तिष्ठति। न कदापि अन्धकारे तस्य निवासस्य शङ्कापि भवतीत्यर्थः।

**इरेव नोप दस्यति समुद्र इव पयो महत्।**
**देवौ सवासिनाविव शितिपान्नोप दस्यति॥ ६॥**

शितिपात् श्वेतपात् सवयज्ञे दत्तः अविः इरेव भूमिरिव नोपदस्यति नोपक्षीयते समुद्र इव समुद्रो यथा न क्षीयते एवं महत् अधिकं पयः क्षीरम्। तदात्मना

१. मनु० ८।३०७।
२. अनेनावबुध्यते यत् करविषयेऽपि लोकसम्मतेर्महत्त्वमासीत्। अस्मिन् विषये शासकानां स्वेच्छाचारो नासीदित्यर्थः।

परिणतो भवतीत्यर्थः। तथा सवासिनौ समानं निवसन्तौ अश्विनौ देवाविव नोपदस्यति। तौ यथा खलु अश्विनौ देवौ सर्वफलप्रदत्वेन उपजीव्येते तथा अयम् अविरपि सर्वफलप्रदत्वेन नोपक्षीयत इत्यर्थः।

तात्पर्यम्—अत्र प्रजया जीवनस्य प्रतिमुख्याङ्गं शान्तिसंरक्षणपूर्वकं सुस्थैर्यार्थं दीयमानस्य करस्य तथैव शासनात् समर्थितानामावश्यककर्त्तव्यानां च सङ्केतो लभ्यते-सर्वाधारा इरा, अपारागाधः समुद्रः, सवासिनौ चिकित्सकावश्विनीकुमारौ चेतिशब्दैः।

क इदं कस्मा अदात्कामः कामायादात्।
कामो दाता कामः प्रतिग्रहीता कामः समुद्रमा विवेश।
कामेन त्वा प्रति गृह्णामि कामैतत्ते॥ ७॥

इदमीदृगित्यनिरुक्तरूपः प्रजापतिः कशब्देनोच्यते। अर्थसामान्यात् किंशब्दोऽपि तस्यैव वाचकः। कशब्दाभिधेयः कस्मै प्रजापतय इदम् दक्षिणात्वेन देयं द्रव्यम्, अदात् दत्तवान्। दाता च प्रतिग्रहीता च प्रजापतिरेव। एवम् अनुसन्दधानस्य प्रतिग्रहदोषो न जायत इत्यर्थः। तथा च तैत्तिरीयकम्—'क इदं कस्मा अदाद् इत्याह। प्रजापतिर्वै कः। स प्रजापतये ददाति'[1] इति। तथा कामः फलविषयोऽभिलाषः। आमुष्मिकफलाभिलाषी दाता। ऐहिकफलाभिलाषी प्रतिग्रहीता। अत उभावपि कामात्मानौ। तथा च काम एव कामाय अदात् दत्तवान् नाहं प्रतिगृह्णामीति आत्मानं व्यावृत्य प्रतिग्रहे कृते तद्दोषो न संस्पृशतीत्यर्थः। तथा च तैत्तिरीयकम्—'य एवं विद्वान् व्याकृत्य दक्षिणां प्रतिगृह्णाति नैनं दक्षिणा व्लीनाति'[2] इति। उक्तम् अर्थम् उपपादयति—कामो दाता कामः प्रतिग्रहीतेति। व्याख्यातप्रायम् एतत्। उक्तो देवतारूपः कामः समुद्रं समुद्रवन्निरवधिकं रूपम् आ विवेश प्राप्तवान्। 'समुद्र इव हि कामः। नैव हि कामस्यान्तोऽस्ति'[3] इति हि तैत्तिरीयकम्। तादृशेन कामेन हे दक्षिणाद्रव्य! त्वा त्वां प्रतिगृह्णामि। नात्मनेत्यर्थः। हे काम! एतत् प्रतिगृहीतं द्रव्यं ते तुभ्यं त्वदर्थमेव।

तात्पर्यम्—इदं कररूपं द्रव्यं केन कस्मै प्रदत्तमिति प्रश्नः। कामः स्वेच्छापूर्वकोऽभिलाष एव स्वापेक्षया श्रेष्ठकामाय उच्चशासकाय अदात्। प्रजाः ददति नगराधिकारिभ्यस्ते ददति परमोच्चशासकायेति परम्परा वर्तते। कामना केवलं भूविषयैव न भवति, तस्याः सम्बन्धो जलादिनापि वर्तत एव। कामनया जनः समुद्रमपि प्रविशति। इत्थमयं सम्पूर्णो व्यवहारः कामनायाः एव वर्तते। कामनयैव सर्वे परस्परं सुनिबद्धाः वर्तन्ते।

उपर्युक्तयोः ६–७ मन्त्रयोर्भूमिकरस्य सामुद्रिककरस्य स्वास्थ्यकरस्य च सङ्केतो वर्तते।

---

१. तै० ब्रा० २।२।५।५। २. तै० ब्रा० २।२।५।१।
३. तै० ब्रा० २।२।५।६।

भूमिष्ट्वा प्रति गृह्णात्वन्तरिक्षमिदं महत्।
माहं प्राणेन मात्मना मा प्रजया प्रतिगृह्य वि राधिषि ॥ ८ ॥

हे देयद्रव्य त्वा त्वां भूमिः भूदेवता प्रतिगृह्णातु। तथा महद् अधिकं विस्तीर्णम् इदम् अन्तरिक्षं च त्वा त्वां प्रतिगृह्णातु, अतः अयं प्रतिगृह्य प्रतिग्रहं कृत्वा तज्जनितदोषात् प्राणेन मुखनासिकाभ्यां सञ्चरता जीवावस्थितिलिङ्गेन मा वि राधिषि। विराद्धो वर्जितो मा भूवम् तथा आत्मना जीवेन तद्विशिष्टशरीरेण वा मा वि राधिषि। तथा प्रजया पुत्रपौत्रादिलक्षणया मा वि राधिषि।

तात्पर्यम्—अस्यां पृथिव्याम् अस्मिन् आकाशे विस्तृते अन्तरिक्षे, सर्वत्र कामनाया एव सञ्चारो वर्तते। अस्याः कामनायाः विस्तारेण अहं प्राणेन आत्मना, प्रजया च सह सर्वदा संलग्नो भवेयम्।

एकादशे काण्डे प्रथमे सूक्तेऽपि मन्त्र एको दृश्यते यत्र करविषयस्य विवेचनं वर्तते। यथा—

अग्ने सहस्वानभिभूरभीदसि नीचो न्युब्जद्विषतः सपत्नान्।
इयं मात्रा मीयमाना मिता च सजातांस्ते बलिहृतः कृणोतु ॥ ६ ॥

अग्निं[1] प्रति—एते शत्रवः (अधुना वशीकृताः शरणागताश्च) तुभ्यं परिमितं बलिभागं पुनः समर्पयेयुः। अत्र बलिशब्दस्यार्थो मेधातिथेरनुसारेण[2] बलिः धान्यादेः षष्ठो भागः इति वर्तते। तथैव सायणानुसारेणायं करः शाला-निमित्तकः ध्वन्यते। एवमेव—

प्रजया रेषयैनान् बलिहाराय मृडतान्मह्यमेव।[3]

अपि च भूमिकरस्योदाहरणम्—

उपस्थास्ते अनमीवा अयक्ष्मा अस्मभ्यं सन्तु पृथिवि प्रसूताः।
दीर्घं न आयुः प्रतिबुध्यमाना वयं तुभ्यं बलिहृतः स्याम ॥[4]

यद्यपि सम्बद्धाधिकारिणो जनेभ्यो विविधान् करान् सङ्कलयन्ति, तथापि तत्सर्वं पश्चात् राज्ञे प्रयच्छन्ति। अर्थाद्राजा एव करग्रहणस्य एकः अधिकारी वर्तते। यथा—

भवन्तु बह्वुं बलिं प्रति पश्यासा उग्रः[5]।

अपि च—

ध्रुवं ध्रुवेण हविषाऽभि सोमं मृशामसि।
अथो त इन्द्रः केवलीर्विशो बलिहृतस्करत्[6] ॥

प्राणरूपिणे राज्ञे बलेः समर्पणम्। यथा मन्त्रयोः—

१. अत्र अग्निः शासकवाचकः।
२. मनु० ८।३०७।
३. अथर्व० ११।१।२०।
४. तत्रैव १२।१।६२।
५. तत्रैव ३।४।३।
६. ऋ० १०।१७३।६।

यस्ते प्राणेदं वेद यस्मिंश्चासि प्रतिष्ठितः ।
सर्वे तस्मै बलिं हरानमुष्मिंल्लोके उत्तमे ॥
यथा प्राण बलिहृतस्तुभ्यं सर्वाः प्रजा इमाः ।
एवा तस्मै बलिंहरान्यस्त्वा शृणवत्सुश्रवः[1] ॥

ईश्वरमिषेण करदानस्य वर्णनम्, यथा--

यस्मै हस्ताभ्यां पादाभ्यां वाचा श्रोत्रेण चक्षुषा ।
यस्मै देवाः सदा बलिं प्रयच्छन्ति[2] ॥

तथैव--दूरे पूर्णेन वसति दूर ऊनेन हीयते ।
महद्यक्षं भुवनस्य मध्ये तस्मै बलिं राष्ट्रभृतो भरन्ति[3] ॥

अनेन सम्बद्धानि अन्यानि रक्षाकरसम्बद्धानि प्रतीकान्यपि द्रष्टव्यानि । अयं करो विशेषतो विशां कृते वर्तते । यथा मन्त्रयोः--

दिशः प्रदिशः करदिच्छिवास्ते ।
इमा विशो अभि हरन्तु ते बलिम्[4] ॥

प्रतिदिवसं दीयमानस्य करस्य सङ्केतो यथा--

अहरहर्बलिमित्ते हरन्तोऽश्वायेव तिष्ठते घासमग्ने[5] ।

गृहराजस्य करो यथा--

अग्नौ तुषाना वप जातवेदसि परः कम्बूकां अपि मृड्ढि दूरम् ।
एतं शुश्रुम गृहराजस्य भागमथो विद्म निर्ऋतेर्भागधेयम्[6] ॥

भागोऽयं गृहाणाम् अधिपतेर्वास्तुनाथस्य कृते वर्तते । अस्य भागस्यैकं विशेषाभिधानमपि मन्त्रेऽस्मिन् विज्ञायते--'कम्बूकान्' इति पदेन । भागः (करः)अयं परम्परागतः आसीदिति ध्वन्यते 'शुश्रुम' इति पदेन ।

सङ्ग्रामकरो यथा--

उत्तिष्ठ त्वं देवजनार्बुदे सेनया सह ।
अयं बलिर्व आहुतस्त्रिषन्धेराहुतिः प्रिया[7] ॥

करस्य परिमाणम्--करपरिमाणविषये स्पष्टरूपेण एकस्मिन्नेव स्थले वेदस्य मतं दृश्यते । यथा--'षोडशं यमस्यामो'[8] । अस्येदं तात्पर्यं नास्ति यत् प्रत्येकं वस्तुजातानां करपरिमाणम् उपर्युक्तं षोडशसङ्ख्याकपरिमाणम् आसीदिति । इदं परिमाणं तु सम्पूर्णराष्ट्रस्य राज्यस्य वा लभ्यमानस्य पूर्णयोगस्य परिमाणं सम्भवति । सम्भवतः अस्य सर्वत्र समागतस्य वैदिकवाक्यस्य इदमेव तात्पर्यं

१. अथर्व० ११।४।१८-१९ । २. तत्रैव १०।७।३९ ।
३. तत्रैव १०।८।१५ । ४. तत्रैव १९।४५।३-४ ।
५. तत्रैव १९।५५।६, अपि च २०।१३१।१२-१३, 'पाकबलिः' 'शकबलिश्च' ।
६. तत्रैव ११।१।२९ । ७. तत्रैव ११।१०।५ ।
८. तत्रैव ३।२९।१ ।

वर्तते। यतो हि अन्नवस्त्रावासादीनां प्रतिवस्तु मूल्यं पृथक् पृथग् भवति, अतस्तेषां करपरिमाणमपि पृथक् पृथग् एव सम्भाव्यते।

इत्थमुपर्युक्तानुसारेण किञ्चिदनुमानेन तेषामीदृशं वर्गीकरणं कर्तुं शक्यते। यथा—

(१) भूमिकरः (३।२९।६; १२।१।६२)
(२) सामुद्रिककरः (तत्रैव)
(३) व्यापारकरः (३।२९।३)
(४) संरक्षककरः (३।२९।१)
(५) गृहराजस्य करः (११।१।२९)
(६) सङ्घटनकरः (३।२९।४-५)
(७) सामान्यतः प्रजाकरः (१९।४५।३-४)
(८) सङ्ग्रामकरः (११।१०।५)

करस्योपयोगः—अयं करः किमर्थं गृह्यते प्रजाभ्यः? जनतायाः अस्य को लाभो भवति? करग्रहीता करं गृहीत्वा किं करोति, तस्य कर्तव्यं च किं भवति? इदमपि विचारणीयं भवति। एतदर्थं विषयेऽस्मिन् समागतानां विशिष्टपारिभाषिकशब्दानां विचारः क्रियते। तत्र शासनस्य द्रव्यप्राप्तेः (कररूपेण) मुख्यत्वेन द्वे साधने निरुक्ते, यस्या उपयोगः प्रजार्थमेव भवति। तद्यथा—(१) इष्टम् (२) आपूर्तम् इति। इष्टशब्देन मनुष्येण स्वेच्छापूर्वकं सम्पाद्यमानोऽभीष्टव्यवहारो गृह्यते, यत्र कस्यापि प्रतिबन्धो न भवति। तत्र व्यक्तिः स्वयोग्यतानुसारम् अध्ययनानुसारं स्वोदरनिर्वाहार्थं च करोति विविधान् व्यापारान्, येषु अन्न-वस्त्र-धातु-शिल्पादीनां व्यापारो भवति। यद्यपि भाष्यकारादीनां मतेन इष्टशब्दस्य यज्ञयागादिः अर्थो विहितः। परं तत्रापि विचारः क्रियते चेत् तर्हि इदमेवावगम्यते यद् यज्ञयागादीनां (बृहच्छ्रौतानां) कर्म सर्वे न कुर्वन्ति, तत्तु स्वेच्छयैव सम्पाद्यते, अर्थात् तत्सर्वेषां साधारणानां कृते परमावश्यकं न भवति, येषां शक्तिर्योग्यता च भवति त एव तत् सम्पादयन्ति। परं पूर्तं तादृशं नास्ति, तत्कर्म आवश्यकं भवति। तत्र सामान्यानि कर्माणि सम्पादनीयान्येव भवन्ति। इदं कर्म पूर्वजैः सम्बद्धं भवति। यथा कृषिः वृक्षारोपणं कूपजलाशयादिनिर्माणञ्च। अस्य आपूर्तिस्तु भवत्यावश्यकी। अनेन कर्मणा अनिच्छयापि कोशः पूर्यत एव। एतत् सर्वमवधार्यैव पूर्वैर्भाष्यकारादिभिराचार्यैः पौराणिकैश्चास्य पूर्तशब्दस्य कूपप्रपा-जलाशयवृक्षारोपणधर्मशालानिर्माणादीति यः अर्थः कृतः स युक्त एव।

जानन्त्येव सर्वे यदस्माकं पूर्वजैः ऋषिभिर्महर्षिभिराचार्यैः स्वराजनीतिकसामाजिकादिरहस्यव्यवहाराणां चिरन्तनसुरक्षार्थम् इमे पूर्वोक्ता नियमाः व्यवहाराश्च धर्मेण सह सुनियोजिताः सन्ति। कालान्तरेण एतेषां यद् वास्तविकं राजनीतिकं सामाजिकं च महत्त्वं रहस्यं च आसीत् तदस्माभिः विस्मृतम्। तथा च तद् विविधेन कालचक्रपरिवर्तनेनापि विलुप्ततां गतमिति अनुमीयते।

अस्माकं कर्मकाण्डादिषु नित्यसम्पाद्यमानेषु पञ्चमहायज्ञादिष्वपि करदानस्यार्थो ध्वन्यते । परं वयं तस्य केवलं पारमार्थिकमर्थमवगच्छामः । एतदर्थं बलिवैश्वदेवविषये कश्चिद् विचारः कर्तव्यः । तत्र याः विविधाः आहुतयो वर्तन्ते ताः कररूपेण सन्ति । यथा 'दिवाचारिभ्यः स्वाहा', 'नक्तंचारिभ्यः स्वाहा' इत्यत्र विविधानां देवतानां कृते आहुतिरूपोऽयं कर एव । अत एव तस्य नाम 'बलिवैश्वदेवम्' इति कृतम् । प्रायश्चित्तविषयेऽपि इयमेव प्रवृत्तिर्वर्तते । प्रायश्चित्तं नाम विशिष्टो दण्डः ।



# षष्ठोऽध्यायः

## पुरं तत्सम्बद्धा विषयाश्च

प्राचीने राज्यशासने 'पुरम्' इत्यस्य महत्त्वपूर्णं वर्णनं समुपलभ्यते। तत्पुरं नाम यत्सुविशालैर्भवनैर्युक्तमभितः परिखायुतं च भवति। वेदोत्तरकालाद् निबन्धकालं (मध्यकालं) यावत् कौटिल्य-शुक्र-कामन्दकादिराजनीतिविज्ञान-विद्भी राज्यशासनशास्त्राचार्यैः, नीतिज्ञैर्वा स्वरचितेषु ग्रन्थेषु राज्याङ्गान्तर्गतानि दुर्गाणि पुराणि वोल्लिखितानि। एतानि सर्वाणि वेदमूलकान्येव। राज्याङ्गविषये पूर्वमेवोल्लिखितं यत् कौटिल्यादिस्वीकृतायाः प्रकृतेरङ्गस्य वा बीजं वेदेषु समुपलभ्यते।

प्राचीनभारतस्य शासकीयवाङ्मये दुर्गपर्यायरूपेण 'पुर'शब्द उपलभ्यते। ऋगादिषु दुर्गशब्दस्य पुरशब्दापरपर्यायस्य बहुत्र प्रयुक्तत्वाद् दुर्गविषये मन्वादीनामेकं नवीनमन्वेषणमिति वक्तुं नैव शक्यते, यतो हि आर्याणामितिहासे युद्धस्य, तत्साधनानां तत्सम्बद्धायाः वास्तुविद्यायाः स्थापत्यकलाया ग्रामनगरसन्निवेशानां च भूयिष्ठान्युदाहरणानि विद्यन्ते। यथार्थतः पर्यालोच्यमाने सति आर्याणामुत्कर्षः आ च ग्रामात् आ च सङ्ग्रामाद् दृश्यते। तत्र साङ्ग्रामिकसाधनागारभूतस्य दुर्गस्याभाव आसीदिति कथमपि वक्तुं न शक्यते, न चाप्युचितमेवास्ति। यद्यपि पुरशब्दो नगरवाचीति केचनाभिप्रयन्ति, तथापि बहुप्रमाणेनेदमेव सिद्धयति यत् पुरशब्दो दुर्गार्थकोऽपि वर्तते। अस्य विवादस्य निरसनार्थं पुरदुर्गशब्दयोः क्रमिकविकासस्य पर्यालोचनमावश्यकं प्रतिभाति। ऋग्वेदतः आरभ्य कौटिल्य-शुक्रादीनां च ग्रन्थानामवलोकनेन पुरदुर्गशब्दयोः वास्तविकार्थबोधो जायते। तत्र वेदोत्तरग्रन्थेषु प्रयुक्तस्य दुर्गार्थवाचकशब्दस्य स्थानं पुरशब्देन स्वीकृतमासीत्। वेदोत्तरग्रन्थेषु यदा स्वतन्त्ररूपेण दुर्गशब्दः स्वस्यार्थे सुप्रतिष्ठितः, तदा वैदिको दुर्गार्थकोऽपि पुरशब्दः स्वतन्त्ररूपेण नगरार्थे सुप्रतिष्ठितो जातः। एतदर्थं पुरशब्दस्येयं परम्परा अन्वेषणीया। अस्य दुर्गार्थं प्रयुक्तस्य पुरशब्दस्यानुकरणं मनुभीष्मादिप्राचीनानामाचार्याणां ग्रन्थेषूपलभ्यते[1]। तदुत्तरकालीनैराचार्यैः कौटिल्यादिभिः स्वतन्त्ररूपेण दुर्गशब्दस्य[2] प्रयोगः कृतः।

१. स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा।
सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते॥ मनु० ९।२९४॥
आत्मामात्याश्च कोशश्च दण्डो मित्राणि चैव हि।
तथा जनपदाश्चैव पुरं च कुरुनन्दन॥ महाभा० शा० ६९।६४–६५।

२. दृगमात्याः सुहृच्छ्रोत्रं मुखं कोशो बलं मनः।
हस्तपादौ दुर्गराष्ट्रे राज्याङ्गानि स्मृतानि ह॥ शुक्र० १।६२॥

पुरादीनां निर्माणस्य विवरणं वास्तुग्रन्थेषु वर्तते। तत्र विषयस्यास्य सङ्केतोऽथर्ववेदस्य शासनशासकीयादिप्रधानमन्त्रिमण्डलसूचके सूक्ते[1] पृथङ्-मन्त्रालयत्वेनोपलभ्यते। यथा—

**अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम्।[2]**

मन्त्रेऽस्मिन् त्वष्टारमिति पदेन वास्तुकर्मणः सङ्केतो वर्तते। वेदेषु वास्तुकर्मणः प्रमुखाधिकारिणौ त्वष्टा, वास्तोष्पतिश्चावगम्येते। वैदिकवाङ्मये वास्तुकलाया बहूनि सुस्पष्टानि प्रमाणानि वर्तन्ते। ग्रामनगरादीनां विधिवद् व्यवहार-सञ्चालनार्थं तेषां प्रमुखानामावश्यकसाधनानामुल्लेखा अपि तत्रैव वर्तन्ते। मानवानां निवासहेतोः गृहाणाम्, तेषु श्रेण्यनुकूलं शरणशाला-हर्म्यादीनां च निर्माणं तदाऽभवत्। तथैव वास्तुनिर्माणसाधनानां यन्त्राणाम्, द्वारप्राकारादीनां च वर्णनमपि तत्र वर्तते। अस्य विषयस्य विपुलं विवरणं पृथ्वीसूक्ते[3], शालासूक्ते[4] च वर्तते। वास्तुविद्याविशारदैः युद्धार्थं सुविनिर्मितस्य दुर्गस्य निर्माणपद्धतिं तद्विवरणं चावगन्तुं तात्कालिक्याः स्थापत्यकलायाः, वास्तु-विद्यायाश्च क्रमेण कश्चिद्विचारः क्रियते। वास्तविकरूपेण विवेचिते सतीदमेवाव-गम्यते यद् वर्तमानैकपक्षान्धानुमानापेक्षया विषयेऽस्मिन् परमोत्कर्षः जात आसीद् इति दृश्यते। वैदिके साहित्ये राष्ट्र-नगर-ग्रामादीनां सन्निवेशस्य, तेषामुत्पादकानां साधनानाम्, तन्निर्मातॄणां च परिपोषिका विपुला सामग्री वर्तते। यथा—राष्ट्र-राज्य-देश-नगर-जनपद-पुर-दुर्ग-गृह-शाला-सदन-शरण-दम-पसः-पस्त्यसद् - पस्त्या-दुरोण-सदस्त-हर्म्य - प्रासाद - कुटी-सहस्रस्थूण-सहस्रधाम-सहस्रकुणपा-सहश्रृङ्ग-वप्र-परिखा - देही-प्राकार-गुहा-ध्रुवा-हिरण्यस्तूप-यूप-वर्त्म-पथादीनाम्, उपमित-परिमित (प्राग्वंश) रशना-दारु-काष्ठ-मृत्-प्रस्तरेष्टका-मुञ्ज-शर-कुश-काश-वीरण-पललादीनां गृहादिनिर्माणसाधनानाम्, मा-मित्-निमित-मिमित-बृहन्मान-वर्ष्म-प्रमा-तेजन-बृहच्छन्दादिमापकशब्दानाम्, परशु-वाशी-प्रशास-सूर्म्यादियन्त्राणाम्, त्वष्टृ-विश्वरूप-विश्वकर्म-वास्तोष्पत्यादीनां वास्तुविद्याचार्याणां निर्मातॄणां च बहुत्र सुस्पष्टानि प्रमाणानि वर्तन्ते।

नगरम् – केषाञ्चिदाधुनिकानां मतं वर्तते यद् वैदिके काले नगरस्योल्लेखो नासीदिति। परमिदं लब्धप्रमाणैः समीचीनं न प्रतीयते। यद्यपि वेदेषु ग्रामीण-सभ्यतायाः विशिष्टं महत्त्वं वर्तते, तथापि तदा नगरस्यापि चर्चा वर्तते एव। आर्याः चिन्तनशीला आसन् इति तु सर्वविश्रुतं वर्तते। अतस्तैः नगरस्य सन्निवेशः आध्यात्मिकबलसम्पादनाय प्रातिकूल्यमावहेत् इति मत्वा ग्रामा एव

---

स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च—इत्यमरः २।८।१७।

स्वाम्यमात्यजनपददुर्गकोशदण्डमित्राणि प्रकृतयः—अर्थशा० ६।१।९६।

१. अथर्व० ४।३०।   २. तत्रैव ४।३०।६।

३. अथर्व० १२ १।   ४. अथर्व० ३।१२।१–२।

सुसेविताः। तात्पर्यमेतत् तदा ग्रामेषु विचारादीनाम् अन्नादीनां च निर्माणं भवति स्म, नगरे च तेषामुपयोगः वितरणम् व्यापारश्च अभवत्। अत एव नगरस्य वायुमण्डलं जनसङ्कुलत्वात् कोलाहलपूर्णमशान्तं च भवति स्म। ये नगरे निवसन्ति ते नागरिकाः।

वेदेषु तत्साहित्ये च 'नगरी'ति विशेषणमुपलभ्यते। 'नगरी' जानश्रुतेयः जनश्रुतेर्वंशः[1]। तत्रायं पुरोहितत्वेनोल्लिखितः। नगरी जानश्रुतेयः कौण्डिन्य नाम्नाऽपरत्रोल्लिखितः[2]। नगरस्य स्पष्टोल्लेखो यथा—'नैतमृषि विदित्वा नगरं प्रविशेत्'[3] आरण्यके एव अध्ययनप्रसङ्गं स्वीकृत्य ग्रामनगरयोः विभेदो लभ्यते। काशी-अयोध्यादीनां नगराणां तत्रस्थानां शासनानां (राज्यानां) च विवरणं वेदेषु प्रचुरतयोपलभ्यते[4]।

जनपदः—संहितां विहाय ब्राह्मणग्रन्थेषु शब्दोऽयं लभ्यते। यथा शतपथे—

**अथ यत्किं च जनपदे अकृतान्नम्।[5]**

तथैव ऐतरेयारण्यके—

**एतस्यामुदीच्यां दिशि ये के च परेण हिमवन्तं जनपदा**
**उत्तरकुरव उत्तरमद्रा इति वैराज्याय तेऽभिषिच्यन्ते।[6]**

अत्र कौ उत्तरकुरुमद्रौ जनपदत्वेन व्याख्यातौ ? जैमिनीय-तैत्तिरीय-गोपथसाम-विधानेषु ब्राह्मणेषु च जनपदशब्दः श्रूयते। जनपदशब्दो विशेषेण जनानां वसतिं सङ्केतयति[7]। वैतानश्रौतसूत्रे जनपदोल्लेखः—

**यजमानस्य विजितं सर्वं समेतु इति जनपदम् उच्चैः श्रावयति[8]।**

शब्दोऽयं जनगणप्रदेशस्यार्थे राष्ट्रस्यार्थे वाऽपि दृश्यते[9]।

## सभेदानि पुराणि—

(१) प्रस्तरपुरम्—सर्वप्रथमं सर्वसुलभानां प्रस्तरपुराणां प्रमाणान्येव उपलभ्यन्ते वेदेषु। यथा इन्द्रः शत्रोः शतसङ्ख्यकानि पुराणि प्राखण्डयदिति ऋग्वेदे श्रूयते—

**शतमश्मन्मयीनां पुरामिन्द्रो व्यास्यत्।**
**दिवोदासाय दाशुषे[10]॥**

(२) प्रस्तरवदेव—तैत्तिरीयसंहितोक्तलौह (यद्यपि तत्र पुराणि त्रिधातुना सहितान्युक्तानि) पुरस्य सङ्केतो लभ्यते ऋग्वेदे। यथा—

१. ऐ० ब्रा० पं० ५ ख० २५; अपि च तत्रैव १।३०। वि० द्र० प्राचीन चरित्र कोश।
२. जै० उ० ब्रा० ३।१०।२; ४०।२। ३. तै० आ० १।१।११।
४. जातककालीन भारतीय संस्कृति पृ० ५०–५४। ५. श० ब्रा० १३ अ० ४।२।१७।
६. ऐ० आ० ८।१४। ७. बृ० उ० २।१।२०।
८. वै० श्रौ० सू० ३७।१३। ९. तै० ब्रा० २।३।९।९।
१०. ऋ० ४।३०।२०।

अच्छिद्रा सूनो सहसो नो अद्य स्तोतृभ्यो मित्रमहः शर्म यच्छ ।
अग्ने गृणन्तमंहस उरुष्योर्जो नपात्पूर्भिरायसीभिः[1] ॥

(३) त्रिधातुभिर्निर्मितम्—अत्र अस्पष्टानां धातूनामुल्लेखपुरस्सरं नाममात्रेण त्रिधातोरुल्लेखेन पूर्वोक्त-लौहरजतहिरण्यानि एव स्वीक्रियन्ते । यथा—

एवेन्द्राग्निभ्यां पितृवन्नवीयो मन्धातृवदङ्गिरस्वदवाचि ।
त्रिधातुना शर्मणा पातमस्मान्वयं स्याम पतयो रयीणाम्[2] ॥

(४) शतलौहपुरम्—शतप्रस्तरपुरमिव शतलौहपुरस्यापि प्रमाणं वेदेषु लभ्यते । इयं नगरीत्यनुमीयते । यथा—

अधा मही न आयस्यनाधृष्टो नृपीतये ।
पूर्भवा शतभुजिः[3] ॥

अत्र शतभुजाशब्देन शतभुजामानितानि, शतस्तम्भैर्युक्तानि प्राकारयुक्तानि च आसन्नित्यनुमीयते[4] । इमान्यतीव सुदृढानि विशालाकृतीनि चासन् । यथा—

अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा ।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः[5] ॥

(५) शारदीपुरम्—पुरस्यास्य प्रमुखतः शरत्कालीनयुद्धार्थमेव प्रयोगोऽभूदिति विज्ञायते । वेदे एव पृथक् पृथग् ऋतुषु युद्धानि भवन्ति स्म । तत्र शारदीपुरस्य इदमेव तात्पर्यं वर्तते । शरत्काले सम्पद्यमानं युद्धं शारदं भवति । तस्य युद्धस्योपकरणानि यत्र संस्थाप्यन्ते तच्छारदीयम् । शारदीयपुराणां स्वामिनः दासाभिधानाः आर्येतरा आसन् । तत्र श्रुतिः—

विदुष्टे अस्य वीर्यस्य पुरवः पुरो यदिन्द्र शारदीरवातिरः
सासहानो अवातिरः शासस्तमिन्द्र मर्त्यमयज्युं शवसस्पते ।
महीममुष्णाः पृथिवीमिमा अपो मन्दसान इमा अपः[6] ॥

अपि च—

सनेम तेऽवसा नव्य इन्द्र प्र पूरवः स्तवन्त एना यज्ञैः ।
सप्त यत्पुरः शर्म शारदीर्दर्द्धन्दासीः पुरुकुत्साय शिक्षन्[7] ॥ इति ।

(६) गोमतीपुरम्—सर्वविश्रुतं वर्तते यद् आर्याणां सर्वश्रेष्ठं बहुमूल्यं च धनं गोवंश आसीत् । अस्योपयोगः दक्षिणायाम्, व्यापार (मुद्राभावे) विनिमये च भवति स्म । अतो गोवंशस्य कृते पृथक् पुरमासीत् । यद्यप्यत्र गोमतीशब्दस्तन्नामिकां नदीं वृक्षच्छाखां गोशालां च सङ्केतयति तथापि क्वचिद् गोवंशपुरस्यापि किंचित्प्रमाणं लभ्यते । यथा—

---

१. ऋ० १।५८।८, अपि च २।२०।८, ४।२७।१, १०।१०१।८ ।
२. तत्रैव ८।४०।१२ ।
३. तत्रैव ७।१५।१४ ।
४. तत्रैव १-१६६-८ ( तु० देही )
५. तत्रैव १-१८९-२ ।
६. अथर्व० २०-७५-२, ऋग्वेदेऽपि १-१३१-४ ।
७. ऋ० ६-२०-१० ।

एवा ह्यस्य सूनृता विरप्शी गोमती मही ।
पक्वा शाखा न दाशुषे[१] ॥

अपि च—

आ पप्राथ महिना वृष्ण्या वृषन्विश्वा शविष्ठ शवसा ।
अस्माँ अव मघवन् गोमति व्रजे वज्रिं चित्राभिरूतिभिः[२] ॥

(७) कण्टकावृता दुर्गाः—अग्रे मनुप्रभृतिभिः प्रोक्तानां कण्टकैरावृतानां दुर्गपर्यायाणां विवरणानां मूलं वेद एव । तद्यथा ऋग्वेदे—

त्वद्भिया विश आयन्नसिक्नीरसमना जहतीर्भोजनानि ।
वैश्वानर पूरवे शोशुचानः पुरो यदग्ने दरयन्नदीदेः[३] ॥

(८) महापुरम्—संहितायां ब्राह्मणेषु च महापुरस्य (दुर्गस्य) उल्लेखो लभ्यते । शब्दोऽयं विभिन्नानां पुराणां केन्द्रीभूतमहापुरस्य आसीन्निदर्शकः । यथा गोपथब्राह्मणे—महापुरम् जयन्तीति[४] ।

(९) सचलं पुरम्—अधुना वैज्ञानिके युद्धे सचलदुर्गभूतानां टैंक-राकेटादीनां बहवः प्रयोगा दृश्यन्ते । मध्यकाले पुराणेऽपि तादृशानां युद्धोपकरणयुतानां पुराणां वर्णनं पठ्यते । तत्सर्वस्य वेद एव स्रोतः । ऋग्वेदे यथा—

त्वं पुरं चरिष्ण्वं वधैः शुष्णस्य सं पिणक् ।
त्वं भा अनु चरो अध द्विता यदिन्द्र हव्यो भुवः[५] ॥

षड्रात्रप्रयोगेऽपि चलमण्डपस्योल्लेखो वर्तते ।

इत्थं पुराणां प्राकारादिभेदेन विविधत्वं लभ्यते । तुलनात्मिकया दृष्ट्याऽग्रे मन्वादिकथितानां दुर्गभेदानां विचारः क्रियते ।

तत्र वेदोपजीविभिः मनुकौटिल्यादिभिर्मीमांसितं दुर्गविवरणं समालोच्यते । याज्ञवल्क्यमतेन दुर्गस्य (पुरस्य) महत्त्वं यथा—'जनकोषात्मगुप्तये'[६] । अर्थाद् दुर्गेण राज्ञः संरक्षणं प्रजाकोषयोश्च वृद्धिर्जायते । मानवधर्मशास्त्र[७]कारमतेन दुर्गस्य साङ्ग्रामिकं महत्त्वमीदृशं वर्तते—दुर्गस्थैको धनुर्धरः वहिःस्थान् शतधनुर्धरान् तथा च शतधनुर्धराः सहस्रधनुर्धरान् अनायासेन पराजयन्ते । तथा चाह बृहस्पतिः—

आत्मदारार्थलोकानां सञ्चितानां तु गुप्तये ।
नृपतिः कारयेद् दुर्गं प्राकारद्वयसंयुतम् ॥ इति ।

---

१. अथर्व २०-७१-४, २. तत्रैव २०-८१-२, ३. ऋ० ७-५-३,

४. गो० ब्रा० उ० २-७, तै० सं० ६-२-३-१, का०सं० २४-१०, मै० सं० ३-८-१, ऐ० ब्रा० पं० १-खं०२३ ।

५. ऋ० ८-१-२८ । ६. याज्ञ० स्मृ० १-३२१ ।

७. एकः शतं योधयति प्राकारस्थो धनुर्धरः ।
शतं दशसहस्राणि तस्माद् दुर्गं विधीयते ॥ मनु० ७।७४।
तथैव राजनीतिप्रकाशे ( २०२ ) राजधर्मकाण्डेऽपि ( २८ ) ।

अपि च कौटिल्यः[1] यत्र दुर्गनिर्माणपूर्वकराजधान्याः सन्निवेशस्योल्लेखं करोति, तत्रैव दुर्गस्य चतुरो भेदानपि लिखति। यथा—(१) औदकः, (२) पार्वतकः, (३) धान्वनः, (४) वनदुर्गश्चेति।

तत्राद्यौ जनसङ्कुलस्थानसुरक्षार्थं, अपरौ जाङ्गलप्रदेशस्य संरक्षणार्थं प्रतिपादितौ। वायुनापि[2] चत्वारो दुर्गाः कथिताः। अन्यच्च मनु[3]-भीष्म[4]-विष्णुधर्मसूत्र[5]-[6]मत्स्याग्नि[7]-विष्णुधर्मोत्तर[8]-शुक्रा[9]दिग्रन्थेषु दुर्गस्य षट्प्रकारा उल्लिखिताः—

(१) धान्वदुर्गम् (२) महीदुर्गम् (३) जलदुर्गम्
(४) वार्क्षदुर्गम्, (५) नृदुर्गम् (६) गिरिदुर्गश्चेति।

अपि च—प्रस्तर-मृदिष्टकान्ताश्चान्ये त्रयो दुर्गाः लिखिताः[10]। इमे स्पष्टत एव वैदिकाः आसन्, वेदे तु विशेषतः मृत्प्रस्तरेष्टकादिभिर्निर्मितानां पुराणां प्रमाणानि लभ्यन्ते।

एषां वेदोत्तरवर्तिनां दुर्गाणामध्ययने कृते सतीदमेवावगम्यते यदेतानि वेदमूलकान्येव। तात्पर्यं वेदे पुरस्य (दुर्गस्य) महत्त्वमासीदिति विस्मर्तुं नैव शक्यते।

---

१. अर्थ० २।३। २. वायुपु०

३. धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा।
नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत् पुरम् ॥ ( मनु० ७।७० )।

४. महाभा० शा० ५६।३५, ८६।४। ५. विष्णुधर्मसू० ३।६।

६. तत्र दुर्गं नृपः कुर्यात् षण्णामेकतमं बुधः।
धनदुर्गं महीदुर्गं नरदुर्गं तथैव च॥
वार्क्षं चैवाम्बुदुर्गं च गिरिदुर्गं च पार्थिव।
सर्वेषामेव दुर्गाणां गिरिदुर्गं प्रशस्यते॥
दुर्गं च परिखोपेतं वप्राट्टालकसंयुतम्। मत्स्यपु० २१६।६–८।

७. 'षण्णामेकतमम् ॥ सर्वोत्तमं शैलदुर्गमभेद्यं चान्यभेदनम्'॥ अग्निपु० २२२।४–५।

८. तत्र दुर्गं नृपः कुर्यात् षण्णामेकतमं बुधः।
धन्वदुर्गं महीदुर्गं नरदुर्गं तथैव च॥
वार्क्षं चैवाम्बुदुर्गं च गिरिदुर्गं च भार्गव।
सर्वेषामेव दुर्गाणां गिरिदुर्गं प्रशस्यते॥ विष्णुधर्मोत्तरे २।२६।६–७।

९. खातकण्टकपाषाणैर्दुष्पथं दुर्गमैरिणम्।
परितस्तु महाखातं पारिखं दुर्गमेव तत्॥
इष्टकोपलमृद्भित्तिप्राकारपरिघं स्मृतम्।
महाकण्टकवृक्षौघैर्व्याप्तं तद्वनदुर्गमम्॥
जलाभावस्तु परितो धन्वदुर्गं प्रकीर्तितम्।
जलदुर्गं स्मृतं तज्ज्ञैरासमन्तान्महाजलम्॥
सुवारि पृष्ठोच्चधरं विविक्तं गिरिदुर्गमम्।
अभेद्य व्यूहविद्वीरव्याप्तं तत्सैन्यदुर्गमम्॥ शुक्र० ४।५०–५३।

१०. मानसोल्लास २।५ पृ० ७५।

# सप्तमोऽध्यायः

## वैदिकसमाजः

वेदेषु विविधानां सृष्टीनां तासां सम्पादकानामनेकसाधनानां बहुत्वे स्थितेऽपि तत्र सर्वस्य कर्ता धर्ता चालकश्च एक एव प्रतिपादितः। यद्यपि प्रसङ्गतः तद् ब्रह्म विराट्पुरुषहिरण्यगर्भप्रजापतिवशाऋतादिनामभिः गोपृथिव्यादिरूपै-स्तत्सम्बद्धसूक्तेषु मन्त्रादिवर्णनैश्च पृथक् पृथक् श्रूयते, तथापि गुणेन लक्षणेन च तदेकमेवाद्वितीयं सिद्धयति। इत्थमनेकधाऽवलोकनेन यथार्थतः नाम-लिङ्गादि-भिन्नस्य शक्तस्य सर्वाश्रयस्य पूर्णस्यावबोधानन्तरमपि व्यवहारे परिदृश्यमानस्य जगतो विज्ञानार्थं तत्तस्थलेषु तत्त्वसृष्टिवर्णनं पठचते, तत्र क्रमेण एकं द्वे त्रीणि चत्वारि पञ्च षड् इत्यादि सङ्ख्याभिः, प्रकृतिपुरुष (मायाब्रह्म) प्राणबाह्याभ्यन्तः-करणादीनि निरूपितानि। तत्रैवाग्रे विविधा लोकाः, देवतिर्यङ्मनुष्यादयो जीवास्तेषां सामाजिकार्थिकराजनीतिकवर्णनान्यपि कृतानि। तेषां सुनिर्वहणाय सुविचारिता व्यवस्था सिद्धान्तश्चापि वर्तते तत्रैव। सप्तमेऽस्मिन्नध्याये तेषामेव समासेन विचारः क्रियते। यद्यप्येषां विचार उपर्युक्तेष स्थलेषु जातस्तथापि प्रसङ्गतः प्रकारान्तरेणात्र स आवश्यकः प्रतीयते।

### सृष्टिमूलानि—

प्रकृतविषयं परिपोषयितुं 'कुतस्तौ जातौ कतमः'[1] इति सूक्तमवलम्ब्य प्रथमतो विराड् वर्ण्यते। सूक्तेऽस्मिन् तत्त्वसृष्टचा सह विविधानां विशेषतः सृष्टिमूलकानां सामाजिकानां प्रश्नोत्तराणां वर्णनं वर्तते यद् राजनीतेः अपि पोषकं भवति। तत्र प्रथमे मन्त्रे—

> कुतस्तौ जातौ कतमः सो अर्धः कस्माल्लोकात्कतमस्याः पृथिव्याः।
> वत्सौ विराजः सलिलादुदैतां तौ त्वा पृच्छामि कतरेण दुग्धा॥

इति श्रूयते। अनेनावबुध्यते यत् सलिलात् पूर्वं कस्माच्चिदेकस्मादग्रे द्वौ समुत्पन्नौ। तत्र कोऽप्यन्यतरः महत्त्वपूर्णो भागः आसीत्। बहवो लोकाः भूविभागाश्चासन्। कश्चिद्दोहकोऽप्यासीत्। अस्मात्सर्वस्मात्प्राग् एकस्तत्त्वविशेषो विराड् आसीत्। जलसहायेन विराजः द्वौ वत्सौ समुत्पन्नाविति।

द्वितीये मन्त्रे– यो अक्रन्दयत्सलिलं महित्वा योनिं कृत्वा त्रिभुजं शयानाः।
वत्सः कामदुघो विराजः स गुहा चक्रे तन्वः पराचैः॥

---

१. अथर्व० ८।९।

स एव विराट् कामधेनुत्वेन सवत्सत्वेन सूच्यते । यथा—
'वत्सः कामदुघो विराजः' इति। एवमेव सप्तमतः एकादशं यावद् विराजो महत्त्वं परिचयश्च कश्यप(पश्यक)र्षिसंवादमिषेण ब्रह्मणः पितुर्विराजः नैकविधत्वं श्रूयते । यथा सप्तममन्त्रः—

**विराजमाहुर्ब्रह्मणः पितरं तां नो विधेहि यतिधा सखिभ्यः ॥** इति ।

अष्टमे मन्त्रे श्रूयते--यज्ञाः विराजमनुसृत्य प्रच्यवन्ते, उपतिष्ठन्ते च । तथा—

**यस्या व्रते प्रसवे यक्षमेजति सा विराडृषयः परमे व्योमन् ॥** इति ।

अर्थाद् विराजः सर्जनात्मकनियमैः ज्ञानेन प्रेरितः सन् देवाधिकारिविशेषः आत्मा वा अनुचरति । अतः सा श्रेष्ठपदस्था परमोच्चस्था वा स्वतः सिद्धयति ।

नवमे— **अप्राणैति प्राणेन प्राणतीनां विराट् स्वराजमभ्येति पश्चात् ।**
**विश्वं मृशन्तीमभिरूपां पश्यन्ति त्वे न त्वे पश्यन्त्येनाम् ॥**

इति श्रूयते । अर्थादियं व्याप्नोति, प्रीणाति, प्रकाशयति, सञ्चालयति च सर्वं विश्वम् ।

दशमे--अस्याः सर्वशक्तिमत्त्वम्, नैर्बाध्यं सञ्चालकत्वादिगुणांश्चाभिवीक्ष्य तस्याः परिचयाकाङ्क्षां स्वाभाविकीं मत्वा प्रश्नाः—

**को विराजो मिथुनत्वं प्र वेद क ऋतुन्क उ कल्पमस्याः ।**
**क्रमान्को अस्याः कतिधा विदुग्धान्को अस्या धाम कतिधा व्युष्टीः ॥**

अर्थादत्रास्याः स्त्रीपुंस्त्वम्, ऋतुः कालः, कल्पं सङ्कल्पः, विक्रमः कर्म, दोहन-व्यवस्था-निवास-इच्छादिविषयकाः प्रश्नाः सङ्केतिताः इति ।

एकादशे—पुनः अस्या व्यापकत्वं प्रथमत्वं प्रकृष्टत्वं च श्रूयते। तथैवास्याः नवगज्जनित्री वधू'रिव सर्वाकर्षकत्वं जयशीलत्वं च सूच्यते ।

त्रयोविंशतितमं मन्त्रं यावदस्याः सामर्थ्येन समुत्पन्नानां विविधानां पदार्थानां यज्ञाग्नीषोममासकविच्छन्दोदीक्षाहोमसमिधमध्वाज्यस्तोमगायत्र्या-दिच्छन्दसां पञ्चषट्सप्तादिवर्गीकृतानां गणानां सङ्केतो वर्तते ।

चतुर्विंशतः षड्विंशं यावत् पुनः गोमिषेण तस्या दोहनस्य दोहकस्य च वर्णनं वर्तते ।

इत्थं समस्तसूक्तस्याध्ययनेन विविधकार्यसम्पादकस्य त्रिषु लिङ्गेषु लब्धस्य विराजः अनेकरूपत्वं बह्वर्थकत्वं च व्यज्यते । अयं विराट् पारमार्थिको लौकिकश्चेति द्विप्रकारो भवति। तत्र पारमार्थिकः परब्रह्म, पुरुष इति पूर्वमेवोक्तः । लौकिको विविधेषु लोकेषु, भूविभागेषु च प्रतिक्षेत्रं लभ्यते, यथा—राजनीति-समाजशास्त्र-सृष्टिशास्त्रादिषु च। समाजशास्त्रानुसारेण सामान्यतो विराजः अर्थाः—

(१) प्रारम्भिकमानवसमूहः ।
(२) साम्यसङ्घशक्तिः ।

(३) समाजोपकारकाणां सञ्चालनतत्त्वानां यज्ञादीनामुत्पादिका ।
(४) पृथिवीरूपा । इति ।

उपर्युक्तानां त्रयाणां विचारः प्रसङ्गानुसारेण कृतः । तुर्यविषये किञ्चिल्लिख्यते । तत्र विराजमवलम्ब्य दोहनदोहककामदुहादिशब्दानवलोक्य प्रायो विद्वांसः विराट्पदस्य गौः इत्यर्थं कुर्वन्ति, तथा चानेन सह पृथोश्चरित्रं[1] योजयन्ति, परं प्रकृतानुसारेणास्य विराजोऽर्थः पृथिवी एव विशेषेण प्रतिभाति, न तु गौः, यतः प्रसवदोहनकामदुहादिशब्दाः पृथिव्यामप्युपयुज्यन्ते एव । तथैव पूर्वोक्तेषु 'राज्यस्य मूलतत्त्वेषु' भूः अप्येकं तत्त्वं स्वीक्रियते । अतः विराजः अर्थः सास्नादियुक्तायाः गोः अपेक्षया विविधानां प्राणिनां विशेषतो मानवानामाधारभूता, धनधान्यादीनां प्रदात्री पृथिवी एव । एवमेव 'वशा'[2] शब्दोऽपि पृथिवीवाचकोऽनुमीयते । केषांचिन्मतेन भवेद् गोवाचकस्तत्र विविधानां यज्ञादीनां दोहनादिवर्णनेन । इदमपि विचारणीयम् ।

यज्ञः—विराडनन्तरं तदनुयायिनो यज्ञस्य विचारो भवति । मन्ये इयं यज्ञसंस्था विराडनन्तरं समस्तसामाजिकव्यवहाराणां विशिष्टा संयोजिका एव । सर्वत्र वेदेषु दृश्यते यद् यज्ञमाश्रित्यैव विविधेषु क्षेत्रेषु समाजः उदक्रामत् । सर्वेषां सृष्टिर्यज्ञादेव श्रूयते । अयमेव समस्तस्य विश्वस्य केन्द्रभूतः । यथा—

**इयं वेदिः परो अन्तः पृथिव्या अयं सोमो वृष्णो अश्वस्य रेतः ।**
**अयं यज्ञो विश्वस्य भुवनस्य नाभिर्ब्रह्मायं वाचः परमं व्योम[3] ॥**

मन्त्रोऽयं पूर्वप्रश्नस्योत्तरत्वेन श्रूयते । तत्र यज्ञस्य केन्द्रीयत्वज्ञापनेन सह तस्याधाररूपायाः भूमेः स्थितिरपि प्रदर्शिता 'इयं वेदिः पृथिव्याः परः अन्तः' इत्यनेन । सोमशब्देन बलस्याभिप्रायः सूचितः, अन्ते च वाचो महत्त्वं प्रतिपादितम् । यज्ञेन सहास्य किमपि वैशिष्ट्यं वर्तते । यज्ञस्य पृथिव्याश्रयत्वमनेनापि श्रूयते—'ब्रह्म यज्ञः पृथिवीं धारयन्ति[4]' इति । एवमेव—

**आस्नस्ते गाथा अभवन्नुष्णिहाभ्यो बलं वशे ।**
**पाजस्याज्जज्ञे यज्ञ स्तनेभ्यो रश्मयस्तव[5] ॥**

अनेनाप्युपर्युक्तभावो दृढो भवति । अपि च इयमेव—'वशा यज्ञं प्रत्यगृह्णात्[6]' तथैवास्याश्चतुर्थांशेन यज्ञस्य प्रतिपादनम् । यथा—

**चतुर्धा रेतो अभवद् वशायाः ।**
**आपस्तुरीयममृतं तुरीयं यज्ञस्तुरीयं पशवस्तुरीयम्[7] ॥**

एवमेव स्कम्भाभिधज्येष्ठब्रह्मआश्रितो यज्ञः 'प्राङ्तायितः'प्राच्यां विस्तृतः । यथा

---

१. पृथुशब्दो विशेषतः 'भू' शब्दस्य समीपे, न तु गोशब्दस्य ।
२. अथर्व० १०।१०।३० ।
३. तत्रैव ९।१०।१४ ।
४. तत्रैव १२।१।१ ।
५. तत्रैव १०।१०।२० ।
६. तत्रैव १०।१०।२५ ।
७. तत्रैव १०।१०।२९ ।

या पुरस्ताद्युज्यते या च पश्चाद्या विश्वतो युज्यते या च सर्वतः।
यया यज्ञः प्राङ्तायते तां त्वा पृच्छामि कतमा सर्चाम्[१]॥

अत्र विद्वद्भिर्वशायाः स्कम्भस्य वा गो-परब्रह्माद्यर्थाः कृतास्तथापि उपर्युक्तवर्णने-नेयं पृथिवी एव विज्ञायते। तथाचात्र यज्ञेन सह बलवाण्यादीनां यद् वर्णनं वर्त्तते तत् प्रायः समस्तेषु स्थलेषु सामान्यत्वेन दृश्यत एव, ये यज्ञस्य मुख्या विषया विज्ञायन्ते।

अपरिमितफलदः अपरिमितोऽयं यज्ञः[२] सर्ववाहकः[३] श्रूयते। अत एव प्रयोजनसिद्धयर्थं प्रयत्नपूर्वकमेनं स्वीकुर्वन्ति विद्वांसः। यथा—

यदद्य त्वा प्रयति यज्ञे अस्मिन्होतश्चिकित्वन्नवृणीमहीह[४]।

तत्राग्निः सविता इन्द्रः प्रैषाः सपत्नीकाः शिष्टाः मरुद् यज्ञं तन्वाना अदिति-र्विष्णुस्त्वष्टा भगः सोमः अश्विनौ सर्वे देवाः ज्ञानेन दानेन च वर्धमाना आत्मनो यज्ञाय लोककल्याणकामनया समर्पयन्ति[५]।

देवैर्यज्ञेनैव यज्ञः सम्पादितः। यथा—

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्[६]।

यज्ञेनैव सर्वैर्विजयो लब्धः सर्वत्र[७]। अयमेव प्रजावर्धकः[८]। अत एवायं प्रजापतिर्वेवेष्टीति विष्णुरित्यादि श्रूयते। अयमेव गोवृषभाव्यश्वनेतृमित्रान्नसभा-धनादिभिर्युक्तः[९]। ऋतानुगामिना यज्ञेन प्रजा बलं राष्ट्रं च जिन्वति। यथा—

ऋतस्य पन्थामनुतिस्र आगुस्त्रयो घर्मा अनु रेत आगुः।
प्रजामेका जिन्वत्यूर्जमेका राष्ट्रमेका रक्षति देवयूनाम्[१०]॥

महत्त्वाद् यज्ञशब्दोऽयं पञ्चसु महायज्ञेषु पाठहोमाऽतिथिसपर्यातर्पणबलिषु व्यापकत्वेन प्रयुक्तः।

मन्ये विविधानां सामाजिकप्रश्नानां समाधानार्थं यज्ञेषु विचारा भवन्ति स्म। अत एव प्रतियज्ञं प्रसङ्गानुसारेण तत्तद्यज्ञानां परिमितोऽवधिः, कालः सम्पादका ऋत्विजश्च निर्धारिताः।

तत्र सभासमितिप्रकरणेऽपि मानवानां सङ्घटनं सम्मेलनं चोल्लिखितम्। अनेन यज्ञस्य गौणत्वं नैव सिद्धयति। वस्तुतः अनयोः किञ्चित् पार्थक्यं वर्तते। यत्र सभा राजनैतिकी संस्था वर्तते, तत्र यज्ञः पूर्णत्वेन सामाजिको विज्ञायते। उपर्युक्तेनाध्ययनेन विषयोऽयमनया तालिकया व्यज्यते—

---

१. अथर्व० १०।८।१०।
२. तत्रैव ९।५।२१–२२।
३. तत्रैव ९।७।३–'धर्मो वहः'।
४. तत्रैव ७।९७।१।
५. तत्रैव ५।२६।१–१२।
६. तत्रैव ७।५।१।
७. तत्रैव ६।९७।१।
८. ता० ब्रा० ६।१।
९. ऋ० ४।२।५।
१०. अथर्व० ८।९।१३।

| सभायाम् | यज्ञे |
| --- | --- |
| नीत्यनुप्राणितत्वम् | धर्मेणानुप्राणितत्वम् |
| विशेषेण राजनीतिकविचारस्य विवेचनम् | समाजराजनीतिविचारार्थिकयुद्धदैव्यरिष्टनिरसनस्य विवेचनम् |
| नीतिनियमानां बाहुल्यम् | कर्मकाण्डस्य विधेश्च बाहुल्यम् |
| पुरुषाणां बाहुल्यं स्त्रीणां गौणत्वं च विचारस्य महत्त्वम् | पतिभिः सह पत्नीनामपि समत्वेन प्रवेशः भोजनपानादिकम् । |

**समाजसङ्घटकः—**

अस्य यज्ञस्य प्रधानसम्पादकोऽग्निर्विज्ञायते, यस्य स्वरूपं महत्त्वं च मन्त्रिपुरोहितयोर्वर्णने निरूपितम् । अयमग्निः प्रसङ्गानुसारेण क्वचिदिन्द्रेण सह क्वचित् सोमेन सहावलोक्यते । अयं ब्रह्मब्रह्मणस्पतिविद्वन्नेतृशब्दैरप्यभिधीयते । सर्वे जनाः आयुःप्राणप्रजापशुकीर्तीनां संवर्धनार्थमेनं प्रार्थयन्ते । यथा—

**उत्तिष्ठ ब्रह्मणस्पते देवान् यज्ञेन बोधय ।**
**आयुः प्राणं प्रजां पशून् कीर्तिं यजमानं च वर्धय[1] ॥**

वैश्वानरः समाजसङ्घटकश्चायमग्निः त्रिषु लोकेषु[2] दृश्यते । अयं सोमेन सह सम्मिल्य सृष्टयुत्पादनस्य सामाजिकव्यवस्थापरिपोषणस्य च मूलभूतां सामग्रीं पुरः स्थापयति यतः इमौ यज्ञस्य पक्षावुक्तौ[3] । अत्र सुस्पष्टम् एव यदग्निः उष्णः उग्रः कठिनश्च । सोमः शान्तः सरलः शामकश्च वर्तते । तत्राग्नित्रयवर्णने मूलभूतेनाग्निना सृष्टिविस्तारस्य सङ्केतो लभ्यते । कुटुम्बपरिवारसमाजानां कर्ता धर्ता संयोजकश्चायमेक एव पितृपितामहप्रपितामहरूपः ।

मिथुनम्—अतोऽत्र सृष्टिविषये भौतिको विचारः क्रियते । वेदेष्वेको मिथुनशब्दो[4] लभ्यते प्राशस्त्येन । शब्दोऽयं सृष्टयर्थकः । यत्र भिन्नलिङ्गाभ्यां स्त्रीपुरुषाभ्यां स्वसंयोगेन सन्तानस्योत्पादनं सृष्टिः । सामान्यतो मिथुनस्यार्थः सङ्घर्षेण समागमेन वा विद्याकलाराज्यसमाजादिविविधपदार्थानां चोत्पत्तिविकासयोर्वा हेतुभूतौ द्वौ पदार्थविशेषौ । वेदेषु विविधानां मिथुनानां ( युगलानां ) वर्णनं वर्तते । यथा—रयिप्राणयोः, अग्नीषोमयोः, प्रकृतिपुरुषयोः ( मायाब्रह्मणोः ) द्यावापृथिव्योः, बृहद्रथन्तरयोः यजमानपत्न्योश्च ।

विविधासु योनिषु प्रकृष्टस्य मानवस्यापि स्त्रीपुरुषयोर्मिथुनं प्रसिद्धम्, यत्र पाणिग्रहणं विवाहविधिं वा पुरस्कृत्य पित्रर्णनिवारणार्थं सन्तानोत्पत्तिमकुर्वन् मानवाः । परिवारे ते मातृपितृपुत्रपौत्रकन्यादौहित्रभ्रातृभगिनीपतिपत्नीश्वश्रूननान्दृजामात्रादिभिः सम्बद्धा अभवन् । एवं च वैदिकः परिवारः सुसंस्कृतः सुसभ्यश्चासीत् ।

---

१ अथर्व० १९।६३।१ । २. यजु० १२।१८ ।
३. अथर्व० ८।९।१४ । ४. तत्रैव १२।३।१२, ९ ।

## विवाहः—

आदर्शपरिवारस्य पवित्रतायाः सम्पन्नतायाश्च कुञ्चिका विवाहसंस्थायां निहिता विज्ञायते। समाजस्य स्थिरतायां विवाहस्य महद् योगदानं वर्तते। वैदिकविवाहसम्बद्धवर्णनेषु वधूवरयोः योग्यतायाः परिचयोऽपि लभ्यते। वैदिकौ कुमारीकुमारौ स्वच्छन्दौ नास्ताम्। विवाहात् पूर्वं कन्यायाः संरक्षकः पितासीत्। विवाहस्य निश्चितः कालोऽपि वेदेषु सङ्केतितः। एतत् सर्वं समासेन विविच्यते। यथा—

एषा ते राजन् कन्या वधूर्नि धूयतां यम।
सा मातुर्बध्यतां गृहेऽथो भ्रातुरथो पितुः[1]॥

अनेन मन्त्रेण व्यज्यते यद् योग्यकालं यावत् कन्या पितुर्भ्रातुर्वा गृह एव स्थातुं शक्ता भर्त्रा विना। तत्रैव तृतीये मन्त्रे कन्यादानात् प्राक् कन्याया आशीर्षशृङ्गारस्य सङ्केतः—

एषा ते कुलपा राजन् तामु ते परि दद्मसि।
ज्योक् पितृष्वासाता आ शीर्ष्णः समोप्यात्॥

तत्रैव सूक्ते वरलक्षणानां वधूपरीक्षायाश्चापि सङ्केतो मननीयः। एवमेव चतुर्दशकाण्डस्य प्रथमद्वितीये सूक्ते अपि पूर्णतो विवाहसम्बद्धे।

सूक्तेऽत्र प्रथमे मन्त्रे द्यावापृथिव्योर्युगलत्वमिषेण विवाहसंस्थाया वर्णनमस्ति। विवाहे वरयात्रायाः महत्त्वं षष्ठमन्त्रतः आद्वादशमन्त्रं श्रूयते। तत्रैव 'सूर्या पतिम् अयात्' 'उपबर्हणम्' 'आञ्जनम्' 'कोषः' 'अनुदेयी' 'नाराशंसी' इति पदान्यवलोकनीयानि सन्ति।

गृह्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः।
भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः[2]॥

इदं पाणिग्रहणस्योदाहरणं वेदेषु पर्याप्तं लभ्यते। गर्भधारणस्य[3] वीरपुत्रोत्पादनस्य च वर्णनम्। यथा—

आ ते योनिं गर्भ एतु पुमान्बाण इवेषुधिम्।
आ वीरोऽत्र जायतां पुत्रस्ते दशमास्यः[4]॥

वेदेषु यत्र पुरुषाः मुख्यतः बाह्यकर्मसु यज्ञशिक्षाकलायुद्धवाणिज्यादिषु प्रवीणाः, तत्रैव स्त्रियो मुख्यतो गृहकर्मसु भोजनपानकुटुम्बव्यवस्थासन्तानसङ्गोपनादिषु दक्षा अवलोक्यन्ते। प्रसङ्गतः स्त्रियः पतिभिः सह यज्ञयुद्धक्रीडाशिक्षादिष्वपि सहयोगिन्यो भवन्ति स्म। स्वदायभागार्थं न्यायालये स्त्रियः दृश्यन्ते[5]।

---

१ अथर्व० १।१४।२–३; २।३६, ६।६०, ६।८२।
विशेषद्र० 'अथर्ववेद–गृहस्थाश्रम' पुस्तकस्य सम्बद्धा विषयाः।
वैदिक संस्कृति का विकास, पृ० १०९–२०६।

२. अथर्व० १४।१।५०।
३. तत्रैव ५।२५।
४. तत्रैव ३।२३।२।
५. वैदिक संस्कृति का विकास पृ० ११७।

अष्टादशानां ब्रह्मवादिनीनां स्त्रीणां सूक्तद्रष्ट्रीत्वम्[1]। अदितिराष्ट्रीदेव्यादीनां योग्यताभाषणादिकं तु प्रसिद्धमेव।

इत्थं विवाहसम्बन्धेन वैदिकस्त्रीणामधिकारकर्तव्ययोग्यतानां सम्यक् परिचयो लब्धः यत्र स्त्रीणां समादरस्य पर्याप्ताः सङ्केताः लभ्यन्ते।

**मानवपरिवारः—**

अग्न्यादीनां देवानां मिषेण मानवस्य व्यवहारकर्तव्यसामाजिकव्यवस्था-सिद्धान्तादीनां सामग्री विपुलतया वर्तते। अग्निप्रजापत्यादिशब्दैरपि जनतायाः सङ्केतो लभ्यते परं स्पष्टतोऽपि मानवस्य कर्तव्यसूचकानि वर्णनान्यवलोक्यन्ते। यथाथर्ववेदस्य द्वादशकाण्डस्य तृतीये सूक्ते। अस्य स्वर्गौदनसूक्तस्य विनियोगे सायणेन प्रतिपादितं यद्-'ऋषिः क्वचिद्ओदनं क्वचिद्दम्पती सम्बोधयति। पक्वस्य स्वर्गौदनस्य प्रतापं तथा तेन प्रापणीयानि फलानि चिन्तयित्वाह। स्वर्गेऽनेनैवौदनेन पुत्रादिभिः समागमो भविष्यतीत्यभिप्रायं दर्शयति। स्वर्गौदनात् क्रव्यादं रक्षःपिशाचं च परिहरति। आदित्याश्च अङ्गिरसश्च एतं क्रव्यादादिभ्यः पालयन्त्वित्याशास्ते। यः स्वर्गौदनः स षष्टिवर्षानन्तरं फलप्रदो भवतीति, तथा पक्तुर्निधिरा इवेति वर्ण्यते। तं च प्राच्यादिभ्यः सर्वाभ्यो दिग्भ्यः संरक्षणार्थं परिदद्मस्ता एतम् अस्मदर्थे परिरक्षन्तु स चास्मान् जरापूर्वकं मृत्युं यावद् भागधेयम् आनयत्वित्याशास्य सूक्तम् उपसंहरति' इति। अत्र सूक्तस्थमन्त्राणां भाष्यं नैवोपलभ्यते। परं विनियोगे'क्वचिद् दम्पती सम्बोधयति' इति। तथाग्रिमवर्णनेन च मानवोपयोगिवर्णनमेव विशेषतः सङ्गच्छते। तदेवात्र समासेन विविच्यते। यथा—

**पुमान्पुंसोऽधि तिष्ठ चर्मेहि तत्र ह्वयस्व यतमा प्रिया ते।**
**यावन्तावग्रे प्रथमं समेयथुस्तद्वां वयो यमराज्ये समानम्॥ १॥**

मानवेषु श्रेष्ठः ज्येष्ठः बली च पुरुष आगच्छतु। अत्र चर्म आसनम्, अधितिष्ठ, तव ये प्रियाः सन्ति तान् समाह्वय, तव सामर्थ्यं यमराज्ये यद्वा समे नियमिते राज्ये समानं भवेत्।

**तावद्वां चक्षुस्तति वीर्याणि तावत्तेजस्ततिधा वाजिनानि।**
**अग्निः शरीरं सचते यदैधोऽधा पक्वान्मिथुना संभवाथः॥ २॥**

हे पुरुष, यादृशी तव सुयोग्या सूक्ष्मा वा दृष्टिस्तथैव पराक्रमास्तेजो बलं च वर्तते। समिधा प्रदीप्ताग्निरिव मिथुना हे दम्पती! परिपक्वौ भवथः।

अत्रोभयोर्मन्त्रयोः प्रथमेन पुरुषस्य बलस्य दृष्टेश्च विवेचनम्। द्वितीयेन मिथुनस्य(दम्पत्योः) विकासः सूच्यते। एवमग्रेऽपि—

**समस्मिंल्लोके समु देवयाने सं स्मा समेतं यमराज्येषु।**
**पूतौ पवित्रैरुप तद्ध्वयेथां यद्यद्रेतो अधि वां संबभूव॥ ३॥**

१. वैदिक संस्कृति का विकास पृ० ४७, १०९-१०, अपि चाथर्व० ७।४८-४९, ११।१।१३-१५।

अस्मिँल्लोके सर्वे सम्मिल्य निवसन्तु। देवयाने उन्नतिबौद्धिकप्रकाशनादिमार्गे सम्मिल्य प्रचलताम्, नियन्त्रिते नियमिते च राज्ये सम्मिल्योपतिष्ठेयाथाम्, युवयोः ( राष्ट्रे समाजे वा ) पराक्रमाद् ये व्यवहारास्ते सम्मिल्य भवेयुः, युवाभ्यां तत् सर्वं सम्पादनीयं प्राप्तव्यं च।

आपस्पुत्रासो अभि सं विशध्वमिमं जीवं जीवधन्याः समेत्य।
तासां भजध्वममृतं यमाहुर्यमोदनं पचति वां जनित्री॥ ४॥
यं वां पिता पचति यं च माता रिप्रान्निर्मुक्त्यै शमलाच्च वाचः।
स ओदनः शतधारः स्वर्ग उभे व्याप नभसी महित्वा॥ ५॥
उभे नभसी उभयांश्च लोकान्ये यज्वनाभिजिताः स्वर्गाः।
तेषां ज्योतिष्मान्मधुमान्यो अग्रे तस्मिन्पुत्रैर्जरसि संश्रयेथाम्॥ ६॥

सर्वजीवानां शुभं कुर्वाणौ समेत्यामृतं भजेथाम्, भवतोर्माता ओदनं पचति येन वाण्या मलिनं पापं निर्गच्छति, तथा पुत्रेण सह वृद्धावस्थां यावत्तिष्ठति उभयोर्लोकयोर्व्याप्तिर्भवति च। सामान्यत उपर्युक्तेषु मन्त्रेष्वनेकतायाः सङ्केतेन सह समस्तानां सामूहिकी मङ्गलकामना च प्रदर्शिता।

इतः एकादशमन्त्रं यावद् ध्रुवादिपञ्चदिक्षून्नतेर्वर्णनम्। ततः पञ्चदशं यावदन्नस्य पवित्रतायाः कुट्टनपेषणयोश्च वर्णनम्। तथा च 'दम्पती पौत्रमघं नि गाताम्'[1] अस्य वर्णनेन पुत्रपौत्रादिभिः सामाजिकराजनैतिकदैवादिपापैर्निर्लिप्ततायाः महत्त्वं सूच्यते।

षोडशमन्त्रत एकविंशतितममन्त्रं यावत् पशुपालनस्य गृहव्यवस्थायाश्चोपयोगिवर्णनम्। कुटुम्बस्योन्नत्यै स्त्रीपुरुषपुत्रपौत्रादिभिः स्वस्वाधिकारकर्तव्ययोः पालनपूर्वकं व्यवहारस्य सङ्केतः। यथा—

यद्यज्जाया पचति त्वत्परः परः पतिर्वा जाये त्वत्तिरः।
सं तत्सृजेथां सह वां तदस्तु संपादयन्तौ सह लोकमेकम्॥ ३९॥
यावन्तो अस्याः पृथिवीं सचन्ते अस्मत्पुत्राः परि ये संबभूवुः।
सर्वांस्तां उपपात्रे ह्वयेथां नाभिं जनानाः शिशवः समायान्॥ ४०॥

अत्र परिवारे सर्वैः सह भोजनस्य स्पष्टमुल्लेखः। अनेन व्यज्यते यद् वेदेषु पूर्णरूपेणान्योन्यं सौजन्यस्य, प्रेम्णः कर्तव्यतायाश्च व्यवहारः आसीत्।

एवमेव सप्तचत्वारिंशतः षष्टितममन्त्रं यावत्पुनः आदर्शगृहस्थाश्रमस्य महत्त्वपूर्णं वर्णनं वर्तते। यथा—

अहं पचाम्यहं ददामि ममेदु कर्मन् करुणेऽधि जाया।
कौमारो लोको अजनिष्ट पुत्रोन्वारभेथां वय उत्तरावत्॥ ४७॥

करुणामयी मम जाया वर्तते। कुमारोऽस्य लोकस्यार्थे समुत्पन्नः उच्चस्थाना-

---

१. अथर्व० १२।३।१४।

भिलाषी उच्चकर्म सम्पादयेत्, एतदर्थमेवाहं पचामि पश्चात् ददामि च। अत्र दानस्यादर्शगृहस्थाश्रमस्य च समासेन वर्णनं श्रूयते।

एवमेव अष्टचत्वारिंशत्तमे मन्त्रेऽपि—अत्र किल्बिषं न, न (च तस्य) कोऽप्याधारः। अपि च ऊनपञ्चाशत्तमे मन्त्रे—प्रियाणां प्रियं कृणवाम, यतमे द्विषन्ति ते तमो यन्तु। पञ्चाशत्तमे यः (अग्निः) ओषधीः सचते यः च सिन्धून्, अग्नयः अन्यो अन्यं सं विदुः। एकपञ्चाशत्तमे मन्त्रे—पुरुषे एषा त्वचां संबभूव, क्षत्रेणात्मानं परिधापयस्व। द्विपञ्चाशत्तमे प्रामाणिकतायाः उदाहरणम् —यद् अक्षेषु, समित्याम् (च) अनृतं वदाः, यद् वा वित्तकाम्याः (अनृतं) वदाः, (तत्) सर्वं शमलं तस्मिन् सादयाथः, समानं तन्तुमभि संवसानौ इत्यादिभिः स्पष्टत उच्चतरा गार्हस्थ्यव्यवस्थावबुध्यते। एवमेवैकादशकाण्डस्य प्रथमे सूक्ते सपरिवारस्य वर्णनं वर्तते, यत्र नीतिज्ञानां शूराणां सुपुत्राणां सुयोग्यानां गृहकर्मणि दक्षाणां पत्नीनां च दर्शनं भवति। अत्र पुत्राणां गृहपतीनां च कृते प्रयुक्तान्यभिधानानि विशेषणानि च विशेषतो मननीयानि।

### धनसम्पत्तिर्व्यवसायश्च—

वैदिकयज्ञेष्वग्नोन्द्रादिभ्यो धनस्य कामनापूर्तिः सर्वत्र श्रूयते। वेदोक्ता 'रयि'रेव सामाजिक्यार्थिकी च शक्तिः। दर्शपूर्णमासादिश्रौतयज्ञेष्वस्याः पर्याप्ताः सङ्केता लभ्यन्ते प्रजान्नधनप्राप्त्यर्थं विविधानां यज्ञानां विधानानि श्रूयन्ते। वेदेषु बुद्धिपूर्वकपरिश्रमेण नीत्या च धनोपार्जनस्य वितरणस्य च प्रमाणं तत्रोपलब्धैरुपदेशैर्ज्ञायते। तत्रानुशासिता जनाः सामाजिकार्थिकनियमेषु सम्बद्धा आसन्। करस्योल्लेखस्तु दण्डप्रकरणे कृत एव। प्रजानामिव कृषिनदीजलान्नावाससुवर्णरौप्यमुक्ताफलपश्वादिरूपधनानां वर्णनं तत्तत्प्रसङ्गेषु वैपुल्येन वर्तते। जीवनोपयोगिवस्तूनां मिथो विनिमयस्य व्यवस्था च जनैः स्वीकृतासीत्। पणप्रपणपणिवणिग्मूल्यशुल्कवस्नमना'निष्क'क्र्यादिशब्दा व्यापारं द्योतयन्ति। धनानां विनिमयस्थलानि यात्रादानद्यूताखेटापणादीन्यासन्। ऋणस्य तन्मुक्तेरपराधभाजनदण्डस्य च व्यवस्थापि तत्रैव श्रूयते। धनसञ्चयोऽप्रयोजको निषिद्धश्च अपराध आसीत्। वणिक्कार्येण सह शिल्पकलादीनामपि समीपतरः सम्बन्धः आसीत्। विविधानामार्थिककार्यसम्पादकानां जीविकानां[3] धनिकानां परिश्रमिणां च वर्णनानि स्थले स्थले विलोक्यन्ते। अर्थोत्पादने शूद्रवर्णस्य दासस्य वा महायोगदानमासीत्। अर्थस्य वितरणं समत्वेन विभज्यते स्म। इत्थं सर्वे सम्पन्ना राजानो विद्वांसो वैश्याः शूद्राश्च स्वस्वाधिकारानुसारेणान्नवस्त्रावासालङ्करणैर्युक्ताः सुखिनश्चासन्। तत्र ब्राह्मणादिवर्गभेदे स्थितेऽपि मिथः सद्भाव आसीत्।

---

१. वैदिक संस्कृति का विकास पृ० २४।
२. अथर्व० ३।१५;५। १४।३; ५।१७।१४; ७।९९।१; २०।१२७।३।
३. यजु० ३०; अपि च—वैदिक संस्कृति का विकास पृ० १२६।

अर्थस्य प्रमुखसम्बन्धः वैश्यैः सहासीत्। मन्ये यदि ब्राह्मणक्षत्रियवाचकाभ्यामग्नीन्द्रशब्दाभ्यां ज्ञानशौर्यरूपावर्थौ व्यज्येते तर्हि ज्ञानशौर्यानन्तरं नैतिकसामाजिकार्थिककार्यपरिपूरणार्थं धनमावश्यकं भवति। तदनुसारेणैवास्य पूर्त्यर्थं तृतीयवर्णविशेषस्य वैश्यस्य नाम वेदेषु श्रूयते। यस्य मूलं 'विट्' इति वर्तते। शब्दस्यास्य प्रजार्थोऽपि सर्वसामान्य एव। अस्य वर्गविशेषस्य राजादिनिर्वाचने प्रमुखं स्थानमासीत्। अनेन सह समस्तानां जनानां सम्बन्धे स्थितेऽपि शूद्रवर्णेन सहास्य निकटतरः सम्बन्ध आसीत्।

आर्थिकसाधनं मुख्यतः कृषिः पशुपालनं चासीत्। उभयोः कार्यपूरणार्थं सहयोगार्थं वा तक्षणकलागृहनिर्माणवाणिज्यादयो दृश्यन्ते। येषां स्वतन्त्रा वर्गाः आसन्। तद्यथा क्रमेण—

सुसस्याः कृषीस्कृधि।[1]
सुरूप कृत्नुमूतये सुदुघामिव गोदुहे जुहूमसि द्यविद्यवि॥[2]
ये धीवानो रथकाराः कर्मारा ये मनीषिणः।[3]

तत्र विशः (प्रजा वैश्या वा) स्थपतिं प्रधानमधिकारिणं विचिन्वन्तिस्म। अनेन व्यज्यते यदेतेषां सङ्घटनं संस्थारूपेणासीदिति। यथा 'विश्पतिः' इति।

वेदेषु यद्यपि क्रमेण वैश्यानां किमुत समस्तप्रजानां धनसङ्ग्रहस्योल्लेखा लभ्यन्ते, व्यक्तिगताः कृषिवाणिज्यादयश्च भवन्तिस्म, तथापि मुख्यत्वेन राज्याध्यक्षः राजा एव प्रमुखो धनपतिरासीत्। यथा—

अयमस्तु धनपतिर्धनानामयं विशां विश्पतिरस्तु राजा।
अस्मिन्निन्द्र महि वर्चांसि धेह्यवर्चसं कृणुहि शत्रुमस्य॥

अनेन राजप्रजयोर्विरोधो नैव मन्तव्यः। पद्धतिरियं सुव्यवस्थां सम्पादयितुमासीत्। मन्ये तत्र ब्रह्मक्षत्रियेतरे वैश्याः शूद्रा दासा वा अर्थस्य निर्माणे संयुक्तास्तर्हि तस्य संरक्षणमुचितं वितरणमपि भवत्यावश्यकम्। तत्र बुद्धिः शौर्यं चावश्यके। सामान्यतोऽवबुध्यते, यत् सपरिश्रमं निर्मातारः समुत्पादितवस्तुनः संरक्षणे व्यक्तिगतोपभोगे चासमर्थाः अयोग्याश्च दृश्यन्ते।

वैदिकैर्न केवलं राजनीत्यामेव लोकतन्त्रीयसिद्धान्तः स्वीकृतः, अपितु समाजस्य प्रतिक्षेत्रं ते परस्परं सम्मिलय मतैक्येन लोकतन्त्रसिद्धान्तमेव स्वीकृतवन्तः। सम्भूय समुत्थानपद्धत्यां तेषां विश्वास आसीत्। समस्तराष्ट्रियसमाजमेकमेव मन्यमानास्ते अर्थमपि राष्ट्रीकृतमेवामन्यन्त।

वेदेषु कृषिकर्मणः तत्सम्पादकसाधनानां च पर्याप्तान्युदाहरणानि सन्ति।

१. यजु० ४।१०। २. ऋ० १।४।१।
३. अथर्व० ३।५।६। ४. वैदिक को० पृ० ४८५।
५. अथर्व० ४।२२।३।

देशान्तरयात्रापूर्वकं वाणिज्यस्योदाहरणं पुरः स्थाप्यते। अथर्ववेदे 'इन्द्रमहं वणिजं चोदयामि'[1] इत्यष्टर्चं सूक्तं वर्तते। सायणानुसारेण तद्यथा—

१ मं०—अहं व्यवहर्ता वणिक्। इन्द्रं पारमैश्वर्योपेतं देवं यद्वा राष्ट्रप्रमुखं राजानम्। अत्र राज्ञ एव वाणिज्यस्य सम्बन्धेन राष्ट्रीकृतवाणिज्यस्य सङ्केतः। यद्यपि पृथक् पृथग्रूपेण प्रजाजनानां कृते वाणिज्यानां सङ्केताः वेदेषु वर्तन्ते तथापि सर्वोपरि राष्ट्रस्यैव महत्त्वं सूच्यते इन्द्रशब्देन। इदं लोकतन्त्रस्य सूचकं वर्तते। वणिक्त्वेन प्रेरित इन्द्रोऽस्मानागच्छतु। सोऽस्माकं पुरतो गन्ता भवतु। किं कुर्वन् अरातिम्, परिपन्थिनम् मृगम् (च) वाणिज्यविघातकं शत्रुं पर्यवस्थातारं मार्गनिरोधकं चौरं व्याघ्रादिकं च। नुदन् हिंसन् (निवारयन्) वाणिज्यलाभरूपधनप्रदाता भवतु। अत्र प्रजाया असामर्थ्यं स्वतन्त्ररूपेण वाणिज्ये सम्पादयितुम्, यतः अत्र वाणिज्यविघातकान् हिंसयितुं पारमैश्वर्योपेतमिन्द्रं प्रति प्रार्थना वर्तते।

२ मं०—धनमाहराणि क्रीत्वा पण्यं विक्रीय।

३ मं०—इच्छमानः वाणिज्यलाभं कामयमानः, शतसेयाय असङ्ख्यातधनलाभाय।

४ मं०—इमां शरणिं प्रवासनिबन्धनां व्रतलोपलक्षणां हिंसाम्, प्रपणः व्यवहर्तुं पण्यद्रव्यस्य परिमाणकल्पनम्। विक्रयः तस्यैव सलाभमूल्यस्वीकारेण परेषां प्रदानम्। प्रतिपणः प्रत्यानेतुं परद्रव्यस्य परिमाणकल्पनम्।

५ मं०—धनेन मूल्यधनेन। धनं वृद्धियुक्तं धनम्। येन धनेन प्रपणं व्यवहर्तुं परिमाणकल्पनम्। सातघ्नः सातं लाभं घ्नन्तीति, लाभप्रतिबन्धकः। तन्मे भूयः भवतु, कनीयः मा अनेन प्रकारेण कृतेन व्यापारेण मम बहुलं धनं भूयात् स्वल्पं मा भवत्विति।

६ मं०—येन धनेनेति पूर्ववत्। यत् प्रकृतं धनं तस्मिन् मे मदीये धने। रुचिं सर्वजनप्रीतिं धनप्रदानेन आदानेच्छाम्, इन्द्र आ दधातु स्थापयतु। तथैव प्रजापतिः सविता सोमः अग्निश्च रुचिं कुर्वन्तु। अत्र प्रजापत्यादयः विशेषार्थकाः। यथा सोमशब्देन ओषधिवनस्पत्यादीनां पणस्य सङ्केतः।

७ मं०—अस्मिन्मन्त्रेऽग्निं प्रति पुत्रपौत्रपश्वादिसंरक्षणार्थं सामूहिकप्रार्थनाया वर्णनम्।

८ मं०—मन्त्रेऽस्मिन् पूर्ववज्जातवेदसमग्निं प्रति प्रार्थना वर्तते। अत्र अश्वायेव स्वगृहे वर्तमानाय अश्वाय काले-काले यथा घासः प्रदीयते तद्वत्। हे अग्ने ते प्रतिवेशाः परिचरणादिना प्रत्यासन्ना वयं, रायः धनस्य पोषणेन, इषा (च) इष्यमाणेन अन्नेन च सम्मायन्तो हृष्यन्तः। विनष्टा मा भूमेति कामनाया वर्णनम्। इत्थमुपर्युक्ते सूक्ते वाणिज्यं श्रूयते।

---

१. अथर्व० ३।१५।

## शिक्षा—

वेदेषु विपुला शैक्षिकी सामग्र्युपलभ्यते या वैज्ञानिकी सर्वोपकारिणी अनुशासिता प्रपञ्चरहिता चासीत्। अस्मिन् विषये पुरोहितस्य प्रामुख्यं वर्तते।

उपनयनानन्तरं समावर्तनं यावदरण्यप्रदेशेषु गुरोराश्रमेषु वा ब्रह्मचारिणः (विद्यार्थिनः) न्यवसन्। तत्र ते गुरोः कृपया वेदान् शास्त्राणि कलाश्चाधीत्य स्वगृहं प्रत्यागच्छन्, तदा देवादयोऽपि तेषामादरमकुर्वन्। यथा—

आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः।
तं रात्रीस्तिस्र उदरे बिभर्ति तं जातं द्रष्टुमभिसंयन्ति देवाः[1]॥

मन्त्रेऽस्मिन् त्रयो विषयाः विशेषेण सूचिताः—

(१) 'उपनयमानः आचार्यः तं अन्तर्गर्भं कृणुते—अर्थाद् गुरुस्तं शिष्यं समीपं संस्थाप्य स्वान्तःस्थाः सर्वा विद्या निष्कपटभावनया शिक्षयति न किञ्चिद् गोपयति। गुरोरियं भावना आसीद् यदयं मदपेक्षयाऽपि श्रेयान् विद्वत्तरो भवेत्। अत एवोक्तम्—पुत्रादिच्छेत् पराजयम्।

(२) 'तिस्रो रात्रीर्बिभर्ति'—अज्ञानान्धकारनिवृत्तिपर्यन्तं तं स्वाश्रमे स्थापयति यतो हि रात्रिशब्दः अन्धकारवाचकः। अयमेव भावः कठोपनिषदि 'तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः'[2] तत्रैव—'त्रीन् वरान् वृणीष्व' इति।

'तं जातं द्रष्टुं देवा अभिसंयन्ति'—एतादृशं प्रशिक्षितं सुयोग्यं ब्रह्मचारिणं (शिष्यं) द्रष्टुं द्युस्थानीयाः देवाः (दिव्यदेहधारिणो विद्वांसः) अपि तत्रागच्छन्तिस्म। ईदृशोऽयं प्रशिक्षितः स्नातकः आचार्यकृपया लब्धज्ञानः सर्वत्र सञ्चरन् उत्तरोत्तरं ज्ञानस्य प्रचारं करोति, समाजराजधर्मयोः प्रचारं करोति, अन्ते स्वयमिन्द्रो भूत्वा शत्रून् विनाशयति च। अयमाचार्यः तस्मै उभयोर्लोकयोः ज्ञानं प्रयच्छति। सर्वे तस्मिन् निवसन्ति[3]। अत्र प्रथमे मन्त्रे 'जातम्' पदमपि मननीयं वर्तते। मातापितृवदाचार्योऽपि छात्राणां जन्मदाता। यथा प्रश्नोपनिषदि—'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयति।' तथा चाहापस्तम्बः—'स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म शरीरमेव मातापितरौ जनयतः'[4]। अयमेवाशयः व्यासवचनस्य—

आचार्ययोनिमिह ये प्रविश्य भूत्वा गर्भं ब्रह्मचर्यं चरन्ति।
इहैव ते शास्त्रकारा भवन्ति विहाय देहं परमं यान्ति सत्यम्॥
शरीरमेतौ कुरुतः पिता माता च भारत।
आचार्यतस्तु यज्जन्म तत्सत्यं वै तथामृतम्[5]॥

---

१. अथर्व० ११।५।३।
२. कठोपनि० १।९।
३. अथर्व० ११।५।६–८।
४. आप० सू० १।१।१५–१७।
५. महाभा० उद्यो० ४४।५, ७।

तात्पर्यमाचार्यादस्यापरं सांस्कारिकं जन्म। अत एवास्य द्वितीयं नाम द्विज इति प्रसिद्धम्। आचार्यस्य विविधानि स्वरूपाणि। अयमाचार्यः स्ववैशिष्ट्येन वैविध्येन चाभिहितो भवति। यथा—

आचार्यो मृत्युर्वरुणः सोम ओषधयः पयः।
जीमूता आसन्त्सत्वानस्तैरिदं स्वराभृतम्[1]॥

तथैवाचार्यस्तक्षेत्यनेनाचार्यस्य त्रैलोक्यकर्तृत्वं कलाप्रवीणत्वं च सूच्यते।

अयमाचार्यं उपनयनसंस्कारात्पूर्वस्य जीर्णशरीरस्य प्रायश्चित्तादिना विनाशं कृत्वा नूतनसंस्कारान् प्रवेशयति ब्रह्मचारिणः शरीरे, अर्थात् पूर्वसांस्कारिकशरीरस्य मृत्यौ जाते सति नूतनसांस्कारिकशरीरस्य भवति प्रादुर्भावः तदा सः द्विजो भवति। यथा—'जन्मना जायते शूद्रः संस्काराद् द्विज उच्यते।' अत एवायं मृत्युरिति। अयमेव श्रेष्ठत्वाद् वरुण उक्तः। तात्पर्यं ब्राह्मणस्य शिक्षाक्षेत्रेऽपि महत्त्वपूर्णस्थानं वर्तते। अथर्ववेदे ब्रह्मचारिसूक्ते[3] गुरुशिष्ययोर्व्यवहारस्याचरणस्य च विशदं वर्णनं लभ्यते।

ब्रह्मगवीसूक्तेऽपि[4] अग्निरूपब्राह्मणस्य महत्त्वपूर्णं वर्णनं लभ्यते। तत्र षष्ठे सोमो यस्य दायादः, इन्द्रो यस्य संरक्षकः, ईदृशो ब्राह्मणः न हिंसितव्यः इत्युक्तम्। तत्रैवाष्टमे—ब्राह्मणस्य जिह्वा ज्या भवति अतः ज्वाला अग्निजिह्वा प्रोक्ता।

तत्रैव 'ब्रह्मजाया'[5] सूक्तेऽपि क्षात्रराज्यस्य संरक्षणार्थं बहव उपाया निरूपिताः। सूक्तेऽस्मिन् ब्राह्मणस्य राज्यशासनीयं महत्त्वमपि व्यज्यते। अत्र विशेषेण ब्राह्मणस्य स्त्रिया दोषेण राष्ट्रस्य महत्या हानेर्वर्णनं लभ्यते। तात्पर्यमग्निरूपब्राह्मणः, यो वैदिके राज्यशासने समाजे च पुरोहितत्वेनोक्तः, सः महत्त्वपूर्णोऽस्तीति सुनिश्चितम्।

## उपसंहारः—

अध्यायारम्भे लिखितमस्ति यद् वेदेषु विराजादिशब्दमवलम्ब्याद्वितीयसर्वतन्त्रस्वतन्त्रपूर्णशक्तस्यादिसिद्धान्तं प्रतिपाद्यैव समस्तविषयाणां व्यवहारः प्रदर्शितोऽस्ति। वस्तुतोऽयं वेदस्य वैशिष्ट्यादिपूर्वकं महानादर्श एव, मन्ये वेदेषु लोकतन्त्रस्य प्राधान्यं वर्तते। अतः सामान्यविचारेण लोकतन्त्रे सर्वे स्वतन्त्राः भवन्ति। अत्र नास्ति कापि शङ्का। परमिदं न विस्मर्तव्यं यत् सा स्वतन्त्रता योग्या नास्ति यत्राधिकारिणः मर्यादा विनश्येत् मनःपूतमाचरणं च नो भवेदित्यादि। स्वातन्त्र्ये स्थितेऽपि सुव्यवस्थार्थं सर्वेषां मनसि कर्तव्यनिर्वहणस्य भावोऽप्यावश्यकः। कोऽप्यनाचारदुराचारादि व्यवहरेच्चेत् तस्य कृतेऽधिकारिणां प्रबलमङ्कुशमप्यावश्यकं भवति। अत एव वेदस्य मूलतत्त्वमद्वितीयाद्युक्तं यत् तदुचितमेव।

---

१. अथर्व० ११।५।१४। २. तत्रैव ११।५।८।
३. सातवलेकरसम्पादिते। अथर्ववेदभाष्य भा० ५।
४. अथर्व० ५।१८। ५. तत्रैव ५।१७।

इत्थं वैदिकसमाजः अधिकाधिकं विकसितः, यत्र आबालवृद्धाः स्त्रीपुरुषाः अनुशासिताः आसन्। सर्वे शिक्षिताः कुशलाः कलावन्तो राष्ट्रियभावनया ओतप्रोताः समन्वयवादिनः नीतिप्रियाश्चासन्। इत्युपर्युक्तेन वर्णनेन विज्ञायते।

वेदेषु मुख्यतो द्वौ समाजावास्ताम्। आर्यास्तद्भिन्ना अनार्या दासादयः[1]। तत्र प्रथमतः ऋषीणां गोत्रमवलम्ब्यैव गणसंस्थायाः स्वरूपं पुरत उपतिष्ठते। ब्राह्मणादिवर्णा अपि गणत्वेन दृश्यन्ते। इत्थं विविधेषु गणेषु विभक्तेष्वपि सम्पूर्णराष्ट्रियसमाज एक एव आसीत्। सर्वे राष्ट्रिया सामाजिकाश्चापत्सु विपत्सु च मतैक्येन सम्मिलन्ति स्म। राष्ट्रियोत्थानमेव सर्वेषामेकं लक्ष्यमासीत्। आनृण्ये सत्यप्रियत्वे च धर्मे तेषां परमास्थासीत्। आदानप्रदानप्रवृत्तिं ते सामाजिकस्यार्थिकस्य चोत्कर्षस्य कुञ्चिकां मन्यन्ते स्म। यथा—

देहि नु मे यन्मे अदत्तो असि युज्यो मे सप्तपदः सखासि।,
ददामि तद्यत्ते अदत्तो अस्मि युज्यस्ते सप्तपदः सखास्मि[2]॥

यजुर्वेदेऽपि —

देहि मे ददामि ते नि मे धेहि नि ते दधे।
निहारं च हरासि मे निहारं नि हराणि ते स्वाहा[3]॥

प्रायः सङ्घटनसूक्तेष्वीदृशानि समानव्यवहाराणां बहून्युदाहरणानि वर्तन्ते। सङ्घटनस्य महत्त्वं तैर्यज्ञैरेव नहि किमुत सिन्धुवायुपतत्रिभिश्च लब्धमासीत्। यथा—

सं सं स्रवन्तु सिन्धवः संवाताः सं पतत्रिणः।
इमं यज्ञं प्रदिवो मे जुषन्तां संस्राव्येण हविषा जुहोमि[4]॥

वेदेषु लब्धाः 'संमनसः, संव्रताः, समाकूतीः, अनुवर्मा, ज्यायस्वन्तः, मा वियौष्ट, सधुराश्चरन्तः, सध्रीचीनाः, संराधयन्तः, अन्यो अन्यस्मै वल्गु वदन्त एत इत्यादिशब्दाः[5] वाक्यानि च सामाजिकताया एकतायाश्चरमोत्कर्षस्य च सूचकानि सन्ति। राज्यशासनेऽपीमानि परमोपकारकाणि। वेदस्यास्य देवानुकरणस्योपदेशः कस्मै न रोचते। यथा—समानज्ञानयुक्ताः ससृष्टकार्याश्च भवन्तु। गुप्तभाषणे, कार्याकार्यपर्यालोचनात्मके व्यवहारेचान्तःकरणेषु एकरूपा[6] भवन्तु।

वैदिकमानवस्य कामनाप्यतीवविशाला तथ्यपूर्णा च भवतिस्म। समुपस्थितानामस्मदादीनां कृते द्यावापृथिवोसरस्वतीन्द्राग्नयश्च ओता आभिमुख्येन परस्परं संबद्धाः स्युः। यथा—

ओते मे द्यावापृथिवी ओता देवी सरस्वती।
ओतौ म इन्द्रश्चाग्निश्चर्ध्यास्मेदं सरस्वती[7]॥

---

१. वैदिक संस्कृत का विकास पृ० १२१–१२४। २. अथर्व० ५।११।९–१०।
३. यजु० ३।५०। ४. अथर्व० १।१५।१।
५. अथर्व० ३।८, ३।३० एषु मन्त्रेष्वविद्वेषेण प्रियशिष्टव्यवहारेण च जीवनयापनस्य महोपदेशो वर्तते।
६. अथर्व० ६।६४, ६।७४। ७. तत्रैव ६।९४।३।

अत्र द्यावापृथिवीशब्देन समाजस्य सुदीर्घक्षेत्रे व्यापकत्वं सूचितमस्ति यत्र सव वागग्रह्मक्षत्रत्वाद्यर्थमभिलषन्ति । एवमेव कल्याणविजयाद्यर्थं सामूहिकप्रार्थनाऽपि बहुत्र श्रूयते[1]।

विविधेषु सङ्घटनयज्ञाद्यभिधातकेषु सूक्तेषु सङ्घटनेन सह वाणीबलादीनां कामनापि प्रचुरासीत् तेषाम् । वैदिकराजनीतिकसमाजेषु च परस्परसम्भाषणस्य महत् स्थानमासीत् । तदानीन्तनानां भाषणे शिष्टप्रियसत्यसरलसरसभावतर्कपूर्ण-मधुरादिगुणानां योग आसीत् । सम्बन्धानुसारेण ते परस्परभाषणेन व्यव-हरन्तिस्म । वस्तुतो मधुरभाषणस्य नीत्यां महत् स्थानं वर्तते । अत एव वेदेष मधुमयभाषणस्य सङ्केतो वर्तते । यथा--

जिह्वाया अग्रे मधु मे जिह्वामूले मधूलकम् ।
वाचा वदामि मधुमद् भूयासं मधुसन्दृशः[2] ॥

परिवारेऽपि भद्रभाषणस्य स्पष्टमुदाहरणम् । यथा--

जाया पत्ये मधुमतीं वाचं वदतु शन्तिवाम् ।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया[3] ॥

अत्र मातृपितृपुत्रजायाभ्रातृस्वसृभिः सह मिथो मधुभाषणं श्रूयते । सुवचन-भाषणार्थका बहवः प्रयोगा वेदेषु चर्चिताः । एवमेव--

स्तुता मया वरदा वेदमाता प्रचोदयन्तां पावमानी द्विजानाम् ।
आयुः प्राणं प्रजां पशुं कीर्तिं द्रविणं ब्रह्मवर्चसं मह्यं दत्त्वा व्रजत ब्रह्मलोकम् ॥[4]

अस्मिन् गायत्रीमाहात्म्यवर्णने गायत्रीं प्रति आयुःप्राणप्रजापशुकीर्तिद्रविणब्रह्म-वर्चसार्थं प्रार्थना वैदिकानामभीष्टपदार्थान् सङ्केतयति ।

सर्वस्य जगतः प्रीतिपात्रताया अभिलाषा यथा--

प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु ।
प्रियं सर्वस्य पश्यत उत शूद्र उत आर्ये[5] ॥

ब्राह्मणक्षत्रादिवर्णान्वितेष्वार्येषु प्रियभावनाया इदमुदाहरणम् । अस्यापेक्षयाप्य-धिकमुच्चतरमुदाहरणम् । यथा--

प्रियो देवानां भूयासम्, प्रियः प्रजानां भूयासम्,
प्रियः पशूनां भूयासम्, प्रियः समानानां भूयासम्[6] इति ।

सर्वत्र पुष्टयर्थं बृहस्पतिसवितारौ प्रति प्रार्थना औदुम्बरसूक्ते—

---

१ अथर्व० ६।७३, ६।१०७, ७।५० ।

२. तत्रैव १।३४।२–३ अपि च 'यथेमां कल्याणीं वाचम्' यजु० २६।२ ।

३. अथर्व० ३।३०।२–३ ।

४. तत्रैव १९।७१।१ ।

५. तत्रैव १९।६२।१ ।

६. तत्रैव १७।१।२–५; अस्मिन्नेव 'विषासहिम्' इति सूक्ते त्रिविधाभ्युदयकामनाऽपि ।

पुष्टिं पशूनां परिजग्रभाहं चतुष्पदां द्विपदां यच्च धान्यम् ।
पयः पशूनां रसमोषधीनां बृहस्पतिः सविता मे नियच्छात्[1] ॥

उपर्युक्तेन मन्त्रेण व्यज्यते यदेतेषां दृष्टिर्विचारश्च विस्तृतः सूक्ष्मश्चासीत् । ते प्रतिक्षेत्रं द्विपदचतुष्पदधान्यादिषु पुष्टिमैच्छन्, निर्धनतां रुग्णतां निर्बलतां च पापरूपां मत्वा ताभ्यः पराङ्मुखा अभवन् ।

इत्थं प्रकृतवेदाध्ययनेन विज्ञायते यद् वेदेषु भिन्नजातिवर्गवर्णादिषु स्थितेष्वपि सर्वेषां समुचितनिर्वाहार्थं सुव्यवस्थितनीतिनिर्धारणं तदा जातमासीत् । एतेषां नीतिव्यवहारेषु क्रमो दृश्यते सामदानाद्युपायवत् । वर्गाधिकारादि-भेदास्त्ववश्यमेवासन् तदा । परं सर्वेषां मौलिकाधिकारकर्तव्यानां व्यवस्थाऽनुचितासीत् । तेषां उपवेशनोत्थानभोजनपानविचारविमर्शक्रीडाशिक्षार्थयुद्धादिव्यवहारेषु नीतिविधानानां च महत्त्वमासीत् । अधिकारानुसारेण ते पृथक्पृथगासनेषूपविशन्ति स्म । उपर्युक्तेषु सूक्तेषु 'चर्मेहि' वाक्यमस्यैवोदाहरणम् । नियतासने पदे उपवेशनव्यवहारस्तु सभ्यतायाः सूचको भवति ।

मन्ये समुचितविकासार्थमुत्कर्षार्थं वा तेषां ब्राह्मणादिवर्गीकरणं दृश्यते । तस्यायमभिप्रायो नासीद् यदुच्चवर्गैर्निम्नवर्गाः प्रताडिता इति । तत्र मर्यादानुसारेण सर्वेषां समादरः अभवत् । अपराधिनां कृते कठोरदण्डव्यवस्था योग्यानां कृते पुरस्काराश्च तत्र श्रूयन्ते । यद्यपि राजपदं सर्वश्रेष्ठं सर्वमान्यं चासीत् परं तदपि विधिनियन्त्रितमासीत् । सिद्धान्तदृष्टयेदं सन्तुलितं मर्यादितं सार्वजनीनं हितं प्रियं च वक्तुं शक्यते, यतस्तत्र पदे-पदे सङ्घटनस्यैकतायाश्च श्रवणं वर्तते । विविधप्रायश्चित्तदण्डादिव्यवस्थया सामाजिकोच्छृङ्खलतायाः निरासोऽपि तत्रैव जायते । अनुशासितानां वैदिकानां बुद्धिपूर्वककठोरपरिश्रमेषु विश्वास आसीत् । सर्वकल्याणे तेषां मुख्या कामनासीत् । अत एव इदं वैदिकं वाङ्मयं विविधास्तदुपदेशाश्च समस्तलोकाय अनन्तकालाय चोपयुक्ताः । अद्यदिनं यावत् तस्य विविधविषयकाः गवेषणा विविधैर्विद्वद्भिः कृताः तथापि ताः अपूर्णा एव । इत्थं च विषयोऽयमत्रैवोपसंह्रियते इति शम् ।

भद्रमिच्छन्त ऋषयः स्वर्विदस्तपो दीक्षामुपनिषेदुरग्रे ।
ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उपसंनमन्तु ॥

●

---

१. अथर्व० १९।३१।५ ।

## सहायकग्रन्थानां तालिका


१. अग्निपुराणम्—मनसुखराय मोर, कलकत्ता ।
२. अथर्वप्रातिशाख्यम्—वि० वि० शास्त्री, लाहौर १९२३ ई० ।
३. अथर्वविधानम् ( कौशिकपद्धतिः )—हस्तलिखितम् ( रटाटेसङ्ग्रहः ) ।
४. अथर्ववेद एवं गोपथब्राह्मण—एम० ब्लूमफील्ड अनु० सूर्यकान्त, चौ० सं० सी० आफिस, वाराणसी १९६४ ।
५. अथर्ववेदबृहत्सर्वानुक्रमणी—रामगोपालशास्त्री, दयानन्द कालेज, लाहौर १९२२ ।
६. अथर्ववेदसंहिता ( पैप्पलादीया )—डा० रघुवीर, सरस्वती विहार, लाहौर १९९३ वि० ।
७. अथर्ववेदसंहिता ( शौनकीया )—श्रीपाददामोदरसातवलेकर, स्वाध्याय-मण्डल, औंध, सतारा १९९५ वि० ।
८. अथर्ववेद ( १-५ भा० )—श्रीपाददामोदरसातवलेकर, स्वाध्यायमण्डल, पारडी ।
९. अथर्ववेद में सांस्कृतिक तत्त्व—राजछत्र मिश्र, पञ्चनद पब्लिकेशन, इलाहाबाद ।
१०. अथर्ववेद ( शौनकीया )—सायणाचार्यकृतभाष्ययुत, विश्वबन्धु, विश्वेश्वरानन्द वैदिक शोध संस्थान, होशियारपुर, वि २०१७ ।
११. अथर्ववेदीयम् आत्मज्योतिषम्-मोतीलाल बनारसीदास, लाहौर १९२४ ई० ।
१२. अमरकोषः—'मणिप्रभा' हिन्दीव्याख्योपेतः, चौ० सं० सी० आफिस, वाराणसी ।
१३. अर्थशास्त्रम्—व्याख्या० वाचस्पतिगैरोला, चौ० सं० सी० आफिस, वाराणसी १९६२ ई० ।
१४. आपस्तम्बधर्मसूत्रम्—( ह० लि० ) पालन्दसङ्ग्रहः ।
१५. आपस्तम्बश्रौतसूत्रम्—टीका चिन्नस्वामी शास्त्री, चौ० सं० सी० आफिस, वाराणसी १९२८ ई० ।
१६. आपस्तम्बश्रौतसूत्रम्-धूर्तस्वामी भाष्य, चौ० सं० सी० आफिस, वाराणसी ।
१७. आर्यविद्यासुधाकरः
१८. आर्यसभ्यताओं का अवस्थान्तर—
१९. आर्यों का आदिदेश—डा० सम्पूर्णानन्द ।
२०. आर्यों का आदिनिवास-मध्यहिमालय—भजन सिंह, सिंह रचना प्रकाशन, इलाहाबाद, १९६८ ई० ।

२१. आश्वलायनगृह्यसूत्रम्—नारायणकृतवृत्ति०, आनन्दाश्रम, पूना १९१७।
२२. आश्वलायनश्रौतसूत्रम्— " " " "
२३ उपनिषद् संग्रहः—(१) सर्वहितैषी कं०, रामघाट, काशी १९३८।
(२) पं० जगदीश शास्त्री, मोतीलाल बनारसीदास, वाराणसी।
(३) खेमराजश्रीकृष्णदास, बम्बई १९६६ वि०।
२४. ऋग्वेदः—श्रीपाददामोदरसातवलेकर, स्वाध्यायमण्डल, पारडी।
२५. ऋग्वेदिक आर्य-राहुल सांकृत्यायन, किताब महल, इलाहाबाद १९५७ ई०।
२६ ऐतरेयब्राह्मणम्—सायणभाष्य, आनन्दाश्रम, पूना १९३० ई०।
२७. ऐतरेयारण्यकोपनिषद्—आनन्दाश्रम, पूना १९५९ ई०।
२८. कठोपनिषद्—गीता प्रेस, गोरखपुर।
२९. काठक संहिता—स्वाध्याय मण्डल, पारडी १९४३ ई०।
३०. काठकगृह्यसूत्रम्—बी० कालेण्ड, दयानन्द कालेज, लाहौर १९२५ ई०।
३१. कात्यायनशुल्बसूत्रम्—चौ० सं० सी० आफिस, वाराणसी १९३६ ई०।
३२. कात्यायनश्रौतसूत्रम्—अच्युत ग्रन्थमाला, काशी १९८७ वि०।
३३. कामन्दकीय नीतिसारः—भा० टी० पं० ज्वालाप्रसाद मिश्र, वेंकटेश्वर प्रेस, बम्बई १९६१ वि०।
३४. काशिका—
३५. कूर्मपुराणम्—वैदिक संस्कृति संस्थान, बरेली।
३६. केनोपनिषद्—गीता प्रेस, गोरखपुर।
३७. कौशिकसूत्रम्—दारिलकेशव भा०, ब्लूमफील्ड, अमेरिकन ओरियण्टल सोसाइटी, न्यू हेवेन १८९० ई०।
३८. कौशिसूत्र दारिल भा०—टिलक महाराष्ट्र विद्यापीठ, पुणे १९७२ ई०।
३९. कौशिकनिघण्टुः—हस्तलिखित ( रटाटेसंग्रह )।
४०. कौषीतकीगृह्यसूत्रम्-ति० रा० चिन्तामणि, मद्रास विश्वविद्यालय १९४४।
४१. कौषीतकीब्राह्मणम्—आंग्ल टि०, बी० लिण्डनर १८८७ ई०।
४२. गणेशपुराणम्—
४३. गणेशमीमांसा ( सम्पूर्ण कुतर्ककर्तन )—हेब्बारशास्त्री, रामघाट, वाराणसी २००१ वि०।
४४. गरुडपुराणम्—
४५. गीता—गीता प्रेस, गोरखपुर।
४६. गीता रहस्य—लोकमान्य बालगंगाधर तिलक
४७. गोपथब्राह्मणम्—मू० नारायण प्रेस, कलकत्ता १८९१।
४८. गोपथब्राह्मणम्—सा० भा०, रा० ला० मित्र, ए० सी० कलकत्ता १८७२।
४९. " —एशियाटिक सोसायटी, जीवानन्द।
५०. चतुर्वेदभाष्यभूमिकासंग्रहः—पं० बलदेव उपाध्याय, १९३४ ई०।

५१. चतुर्वेदविदग्निहोत्रिश्रीमद्रामचन्द्रशास्त्रिरटाटेमहोदयानाँ स्मृतिग्रन्थः, वाराणसी ।
५२. चिद्विलास--डा० सम्पूर्णानन्द, ज्ञानमण्डल, वाराणसी २००१ वि० ।
५३. छान्दोग्योपनिषद्--गीता प्रेस, गोरखपुर ।
५४. जातककालीन भारतीय संस्कृति--मोहनलाल महतो 'वियोगी', बिहार राष्ट्रभाषा परिषद्, पटना १९५८ ई० ।
५५. ताण्ड्यब्राह्मणम्--सं चिन्नस्वामी शास्त्री, जयकृष्णदास हरिदास गुप्त, चौ० सं० सी० आ०, वाराणसी १९९१ वि० ।
५६. तैत्तिरीयारण्यकम्-सा० भा०, आनन्दाश्रम संस्कृत ग्रन्थावली, १९०१ ई० ।
५७. तैत्तिरीयब्राह्मणम्-- " "
५८. तैत्तिरीयसंहिता-- " "
५९. तैत्तिरीयोपनिषद्-- " "
६०. दीघ्घनिकाय--अनु० भिक्षु राहुलसांकृत्यायन, जगदीश कश्यप
६१. देवासुर संग्राम और संस्कृति—
६२. दैवतसंहिता—सर्ववेदीया (२-भा०) स्वाध्यायमण्डल, पारडी १९४१-४३ ।
६३. नारदस्मृतिः—
६४. निरुक्तम् ( निघण्टुपाठसमुपेतम् )—भगवद्दुर्गाचार्यकृत, खेमराज श्रीकृष्ण-दास, वेंकटेश्वर प्रेस, बम्बई १९६९ वि० ।
६५. नीतिमञ्जरी सभाष्या—श्रीद्याद्विवेदः, सम्पा० सीताराम जयराम जोशी, हरिहरमण्डलव्यवस्थापकेन, शालिग्राम शर्मणा प्रकाशिता १९९० वि० ।
६६. नृसिह उत्तरतापिन्युपनिषद्-(उप सं०) मोतीलाल बनारसीदास,वाराणसी ।
६७. पञ्चकल्पः--( ह० लि० रटाटेसंग्रहः )
६८. पञ्चपटलिका—
६९. पञ्चविंशब्राह्मणम्—टी० वी० कालैण्ड, एशियाटिक सोसायटी, कलकत्ता १९३१ ई० ।
७०. पाणिनीयशिक्षा—
७१. पाणिनिकालीन भारतवर्ष-डा० वासुदेवशरण अग्रवाल, मोतीलाल बनारसी दास, वाराणसी २०१२ वि० ।
७२. पातञ्जलमहाभाष्यम्--
७३. पद्मपुराणम्—वेंकटेश्वर प्रेस, बम्बई ।
७४. पारस्करगृह्यसूत्रम्—
७५. पारस्करश्रौतसूत्रम्—
७६. पुराणदर्शन चित्र परिचय--विनायकरामचन्द्र रटाटे ।
७७. पुरुषार्थ ( मासिक पत्रिका )—सम्पा० श्रीपाददामोदरसातवलेकर, स्वाध्यायमण्डल, औंध ।

७८. प्राचीन चरित्रकोश—म० म० सिद्धेश्वर शास्त्री, पूना १९६४ ई० ।
७९. प्राचीन भारत का राजनीतिक और सांस्कृतिक इतिहास—रतिभानु सिंह नाहर, किताब महल, इलाहाबाद द्वि० सं० १९६१ ई० ।
८०. प्राचीन भारत की साङ्ग्रामिकता—पं० रामदीन पाण्डेय, बिहार राष्ट्रभाषा परिषद्, पटना १९५७ ई० ।
८१. प्राचीन भारतीय साहित्य की सांस्कृतिक भूमिका—डा० रामजी उपाध्याय, देव भारती प्रकाशन, लोकभारती प्रकाशन, इलाहाबाद १९६६ ई० ।
८२ प्राचीन भारतीय साहित्य–लाजपतराय, मोतीलाल बनारसीदास, वाराणसी ।
८३. प्राचीन भारतीय वेशभूषा—डा० मोतीचन्द, भारती भण्डार, प्रयाग २००७ वि० ।
८४. प्राचीन भारतीय विचार और विभूतियां—डा० राधाकुमुद मुखर्जी, राजकमल प्रकाशन, दिल्ली १९५८ ।
८५. प्राचीन भारत में जनतन्त्र—डा० देवीदत्त शुक्ल, हिन्दी समिति, सूचना विभाग, उत्तरप्रदेश, लखनऊ १९६६ ।
८६. प्राचीन भारत में राज्य और न्यायपालिका—हरिहरनाथ त्रिपाठी, मोतीलाल बनारसीदास, वाराणसी १९६५ ई० ।
८७. प्राचीन भारतीय शासन पद्धति–प्रो० अनन्त सदाशिव अल्तेकर, २००४ वि० ।
८८. बृहदारण्यकोपनिषद्—गीता प्रेस, गोरखपुर ।
८९. बृहद्देवता ( शौनकीया )—मैकडानल, एशियाटिक सोसायटी, कलकत्ता १८९३ ई० ।
९०. बौधायनगृह्यसूत्रम्—श्रीनिवासाचार्यः, मैसूर गवर्नमेण्ट प्रेस, १९०४ ई० ।
९१. बौधायनश्रौतसूत्रम्—बी० कालेण्ड, एशियाटिक सोसायटी, कलकत्ता १९०४ ई० ।
९२. बौधायनशुल्बसूत्रम्— ( हस्तलिखित पालन्दे संग्रह ) ।
९३. ब्रह्मपुराणम्—वेंकटेश्वर प्रेस, बम्बई ।
९४. ब्रह्मविनयः—विद्यावाचस्पति श्रीमधुसूदन ओझा, सम्पा० वासुदेवशरण अग्रवाल, पृथिवी प्रकाशन, वाराणसी १९६४ ई० ।
९५. ब्रह्माण्डपुराणम्—खेमराज श्रीकृष्णदास, वेंकटेश्वर प्रेस, बम्बई ।
९६. भारतीय इतिहास की भूमिका ( प्राचीन भारत )—डा० राजबली पाण्डेय, मलहोत्रा ब्रदर्स, दरियागंज, दिल्ली १९४९ ई० ।
९७. भारतीय नीति का विकास ।
९८. भारतीय विचारधारा—हरिहरनाथ त्रिपाठी, नन्दकिशोर भार्गव एण्ड संस, वाराणसी १९१३ ई० ।
९९. भौतिक विद्यांचा इतिहास—( लेख ) प० कृ० गोडे चित्राव, अ० प्र० पूना १९५४ ई० ।

□ १९







१००. मत्स्यपुराणम्--मनसुखराय मोर, कलकत्ता ।
१०१. मनुस्मृतिः—( १ ) पण्ड्योपाह्वशास्त्रिहरिहरात्मजेन प्राणजीवनशर्मणा संस्कृता, गुजराती प्रेस, बम्बई १९१३ ई० ।
( २ ) निर्णयसागर मुद्रणालय, १९४६ ई० ।
१०२. महाभारतम्—गीता प्रेस, गोरखपुर ।
१०३. महामहोपाध्याय वारेशास्त्री अभिनन्दनग्रन्थः–डा० राहूकर, पूना १९६५ ई०।
१०४. महावस्तुः ।
१०५. माण्डूक्योपनिषद्--गीता प्रेस, गोरखपुर ।
१०६. माण्डूकी शिक्षा ।
१०७. मानसोल्लासः ।
१०८. मार्कण्डेयपुराणम्--मनसुखराय मोर, कलकत्ता ।
१०९. मुक्तिकोपनिषद्—( उपनि० सं० ) मोतीलाल बनारसीदास, वाराणसी ।
११०. मुद्राराक्षसम् ।
१११. मुण्डकोपनिषद् ( उपनि० सं० ) मोतीलाल बनारसीदास, वाराणसी ।
११२. मैत्रायणी संहिता–(सम्पा०) श्रीपाददामोदर सातवलेकर, स्वाध्यायमण्डल, पारडी १९४२ ई० ।
११३. यजुर्वेदः-(सम्पा०) श्रीपाददामोदर सातवलेकर, स्वाध्यायमण्डल, पारडी ।
११४। यज्ञमधुसूदनम्—श्रीमधुसूदन ओझा १९३० ई० ।
११५. यज्ञसरस्वती--मधुसूदन शर्मा, अलवर २००३ वि० ।
११६. याज्ञवल्क्यशिक्षा ।
११७. याज्ञवल्क्यस्मृतिः ।
११८. रघुवंशमहाकाव्यम्--चौखम्बा संस्कृत सीरिज आफिस, वाराणसी ।
११९. राजनीतिशास्त्र—ए० डी० आशीर्वादम् (१) अनु० नरोत्तम भार्गव ।
(२) गंगारत्न पाण्डेय, दि अपर इंडिया पब्लिशिंग हाउस, लखनऊ १९५३ ।
१२०. राजनीति का अग्रदूत--राजेश्वर शास्त्री द्रविड, रामघाट, वाराणसी ।
१२१. राधामाधव में विवाद--राजवाडे ।
१२२. वायुपुराणम्--खेमराज श्रीकृष्णदास, वेंकटेश्वर प्रेस, बम्बई ।
१२३. वाल्मीकिरामायणम् ।
१२४. विष्णुधर्मोत्तरपुराण--वैदिक संस्कृत संस्थान, बरेली ।
१२५. विष्णुपुराणम्—वै० सं० सं० बरेली ।
१२६. वेदकालीन समाज—शिवदत्त ज्ञानी ।
१२७. वेदाङ्क—श्रीमधुसूदनाभिनन्दन समितिः जयपुर १९९३ वि० ।
१२८. वेद धरातल ।
१२९. वेदांचे अपौरुषेयत्व--शङ्कराचार्य कर्वीपीठ, कोल्हापुर ।
१३०. वेदापौरुषेयत्वम्—पण्डितराज राजेश्वरशास्त्री द्रविड ।

१३१. वेदातीलराष्ट्रदर्शन—( २ भा० ) पं० बालशास्त्री हरदास, नागपुर।
१३२. वेदरहस्य—योगी अरविन्द; पाण्डिचेरी १९४८ ई०।
१३३. वेदशास्त्रदीपिका—वेदशास्त्रोत्तेजक सभा, पूना १९५४ ई०।
१३४. वैदिक इण्डेक्स—
१३५. वैदिक कोष—डा० सूर्यकान्त।
१३६. वैदिक कोष—मधुसूदन शर्मा, जयपुर १८२८।
१३७. वैदिक कोष—हंसराज, दयानन्द कालेज, लाहौर १९२६ ई०।
१३८. वैदिक ज्योति—वैद्यनाथ शास्त्री, पोरबन्दर १९५५ ई०।
१३९. वैदिक देवता विचार—श्रीपाद दा० सातवलेकर, औंध।
१४०. वैदिक देवशास्त्र—डा० सूर्यकान्त, भारत भारती प्रकाशन १९६१ ई०।
१४१. वैदिक पदानुक्रमकोश—विश्वबन्धु शास्त्री, वैदिक रिसर्च इन्स्टीट्यूट, होशियारपुर।
१४२. वैदिकमन्त्र कल्पलता—काश्मीर प्रताप स्टीम प्रेस, १९७० ई०।
१४३. वैदिक साहित्य का इतिहास—भगवद्दत्त, दयानन्द ग्रन्थमाला, लाहौर।
१४४. वैदिक विज्ञान और भारतीय संस्कृति—म० म० गिरिधर शर्मा चतुर्वेदी।
१४५. वैदिक शब्दार्थ परिचय—विश्वबन्धु शास्त्री, लाहौर १९२९ ई०।
१४६. वैदिक सम्पत्ति—पं० रघुनन्दन शर्मा, शेठ सूरजी वल्लभदास, बम्बई १९९६ वि०।
१४७. वैदिकसाहित्य—श्री रामगोविन्द त्रिवेदी, भारतीय ज्ञानपीठ, काशी।
१४८. वैदिकसाहित्यचरितम्।
१४९. शतपथब्राह्मणम्—( सायणभाष्य ) लक्ष्मीव्यंकटेश प्रेस, कल्याण १९४० ।
१५०. शाक्तप्रमोदः—खेमराज श्रीकृष्णदास, वेंकटेश्वर प्रेस, बम्बई १९६२ वि०।
१५१. शिक्षासंग्रहः—आर० टी० एच० ग्रीफिथ, बनारस प्रि० प्रेस १८८९।
१५२. शिक्षादिवेदषडङ्गम्—कृ० भ० गोरे, बम्बई १९१५ ई०।
१५३. शिवपुराणम्—पाण्डेय रामतेजशास्त्री, पण्डित पुस्तकालय, काशी २०२० वि०।
१५४. शिवराज्याभिषेकप्रयोगः—गागाभट्टः, पी० पी० एच० बुकस्टाल, बम्बई १९५९ ई०।
१५५. शिशुपालवधकाव्यम्—चौ० सं० सी० आफिस, वाराणसी।
१५६. शुक्रनीतिः।
१५७. शुक्रनीतिसारः।
१५८. श्रीमद्भागवतम्।
१५९. श्रौतकोषः—डा० चि० ग० काशीकर, वै० सं० मं० पूना १९५८।
१६०. श्रौतपदार्थनिर्वचनम्—नागेश्वर शा० सोमण, ई० जे० ला० कं०, बनारस १९१९।

१६१. षड्विंशब्राह्मणम्—पं० चिन्नस्वामी शास्त्री, चौ० सं० सी०, वाराणसी १९३५ ई०।
१६२. संस्कृत हिन्दी कोश—आप्टे, मोतीलाल बनारसीदास, वाराणसी १९६६।
१६३. सामवेदः (कौथुमी) (सम्पा०) श्रीपाददा० सातवलेकर, स्वाध्यायमण्डल, पारडी।
१६४. सीतोपनिषद्—(उपनि० संग्रहः)।
१६५. हिन्दूराज्यतन्त्र—काशीप्रसाद जायसवाल, अनु० रामचन्द्र वर्मा, नागरी प्रचारिणी सभा, काशी १९८४ वि०।
१६६. हिन्दूराज्यशास्त्र—अम्बिका प्रसाद वाजपेयी, हिन्दी साहित्य सम्मेलन, प्रयाग, १९८४ वि०।
१६७. हिन्दू संस्कृति अंक—विशेषांक, गीताप्रेस, गोरखपुर १९५० ई०।
१६८. हिरण्यकेशी आपस्तम्ब शुल्बसूत्रम्—हस्तलिखित (गणेशभट्ट बापट संग्रह)।

●



